भाद्रपदाङ्कः

॥ श्रीशः शरणम् ॥

# मधुरवाणी

संस्कृतमासपत्रिका

---

संस्थापकः
वै. बुलींश्रीनिवासाचार्यः
संस्कृतसाहित्यभूषणम्

सम्पादकः
पं. गलगलीरामाचार्यः
संस्कृतसाहित्यरत्नम्

सहसम्पादकः
पं. गलगलीपण्ढरीनाथाचार्यः
सं. सा. सुधाकरः

---

वार्षिकं मूल्यम् रूपकपञ्चकम्

# अनुक्रमणिका

॥ श्रीशः शरणम् ॥



# मधुरवाणी.

सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१४-वर्षे ] १८७१ शकस्य [ ५ सञ्चिका

राधाधरमधुस्यन्दमिलिन्दाय मधुद्विषे ।
कृष्णापटकुविन्दाय गोविन्दाय नमोऽस्तु नः ॥

---

## मङ्गलम्

"वर्षासारभरेण कोमलतरं क्लिन्नं शरीरं शिशोः
राधे! त्वं वसनाञ्चलेन तरसा सम्मार्जयैनं चलम्" ।
नन्दादेशवशात्तथा विदधतीमाकृष्टचैलाञ्चलो
व्रीडालोलदृशं मुदा स्मितमुखीं श्लिष्यन् हरिः श्रेयसे ॥१॥

रुचिराम्बरान्तरलसत्पयोधर-
स्फुरदच्छकान्तवपुषं नतोऽस्म्यहम् ।
गजराङ्गतिं स्वसदृशं च सश्रियं
जगतः पुराणपितरं च मातरम् ॥२॥

नवनीरदालिकमनीयविग्रहम्
नवनीतचोरमविनीतनिग्रहम् ।
नवनीयमीशममनीयसज्जनं
कुहनावनीतलवनीपकं भजे ॥३॥
श्रीयोषाधरपीयूषयूषनिश्शेषशोषिणे ।
नमोऽघपेषिणे सौख्यपोषिणे गोपवेषिणे ॥४॥

सहसंपादकस्य

## मासावतरणिका

सन्मार्गान्वितनोषि पङ्कमलिनान्सर्वं दिनं दुर्दिनं
स्वच्छं विष्णुपदं तमोमयमहो ! हंसांश्च दूरंगतान् ।
एवं सत्यपि जीवनप्रद इति त्वं श्रावण ! श्लाघ्यसे
एकस्मिन्नपि सद्गुणे हि वहवो दोषा निमज्जन्त्यलम् ॥

सहसंपादकस्य

## सुभाषितम्

गृहणासङ्कोचं त्वमिह विपुलोत्कोचमपि वा
कुतन्त्रैर्व्यापारैः कुपथचलितैरार्जय धनम् ।
यथेच्छं मद्यं वा पिव तदपि मा विस्मर सखे !
सदा गान्धीटोपीं शिरसि किल धर्तुं शुभफलाम् ॥

सहसंपादकस्य

## अन्योक्ति

वासन्ते समये नवान्किसलयग्रासान्समासादयन्
वैपञ्चीध्वनिमञ्जुपञ्चमरवं प्रोदञ्चयन् कोकिल ! ।
माऽन्यान्दीनविहङ्गमान् परिहस त्वं माऽधुना विस्मरेः
तद्धेमन्तकृतान्तकर्शितदशां वैय्याकु◌ीं तां तव ॥

सहसंपादकस्य

## भारते

# स्वातन्त्र्यमहोत्सवः

महात्मनो गान्धिमहाभागस्य पुण्यप्रभावेण, कर्तृत्वशालिनां श्री नेहरू-पटेलप्रभृतीनां नेतृप्रवराणां तृणीकृतस्वार्थं प्राणनिरपेक्षं साम्राज्यविध्वंसन-क्षमप्रबलान्दोलनेन, भारतीयवीराणामात्मबलिदानेन, शूराग्रेसरस्य श्री बाबू सुभाषबोसमहोदयस्य स्वतन्त्रसैन्यनिर्माणसाहसेन आङ्ग्लसैन्ये भेदोत्पादनेन, द्वितीयमहायुद्धे संपूर्णहतबलतया आङ्ग्लानां साम्राज्यशासनयोग्यताया अनवशेषतया बहोः कालात्कथमपि लब्धं स्वातन्त्र्यं तपस्विना भारतेन। स्वातन्त्र्यलाभो न तादृशमानन्दमजनयद्वारितायानां भारतमातृशरीरविच्छेदेन। दशलक्षाधिकजनरुधिरप्रदिग्धं चित्रहिंसया हतानां शिशूनां,बलात्कारेण भ्रंशित-पातिव्रत्यानां साध्वीमणानां साक्रोशशापाभिभूतं स्वातन्त्र्यं कस्य वा सचेतसो दुःखासंभिन्नं सुखमुत्पादयेत्। जननीदेहविच्छेदः तथाभूतो हत्याकाण्डः सतीनां तादृशी दुर्दशा च मनश्चक्षुषः सदैव गोचरा न कदापि विस्मर्तुं शक्यन्ते भारतीयैः। आङ्ग्लानां कुटिलतन्त्रेण विहितो भारतविच्छेदोऽगत्याऽनिच्छयैव स्वीकर्तव्यतयाऽऽपतितो मनस्विनां भारतनेतॄणां स्वातन्त्र्यलाभाय।

एवं बहुकृच्छ्रेण विपुलमूल्यदानेन च लब्धेऽपि स्वातन्त्रे नाहार-सौकर्यं नापि वसनसौलभ्यम्। प्राणिमात्रस्यात्यावश्यकानां वस्तूनामीदृशी दशा, तर्हि किं पुनरितरभोगपदार्थानाम्। एतद्दुरवस्थादूरीकरणाय समाश्वासो विधीयते नेतृभिः, परं तथा कर्तुं न पार्यते विविधराजकीयजटिलसमस्या-शतैः। काश्मीरसमस्या महतीं चिन्तांमुपजनयति। राष्ट्रसभीयप्रमुखेष्वपि अविश्वासावहो महानक्षम्यो नीतिभ्रंशो प्रतिदिनं वर्धमानो दृश्यते। मन्त्रिणोऽपि नैकदोषारोपास्पदीभूताः किङ्कर्तव्यतामूढप्रजानां चेतसि सांप्रतिकराज्य-विषये एव महान्तमनादरं जनयन्ति खेदातिशयं च। अधार्मिक नव्य विधि-विधानेन सनातनधर्मानुयायिनः सन्तप्यन्ते। कृषिशासनेन (टेनन्सी ॲक्ट) क्षेत्रस्वामिनः संत्रस्ताः। वाणिज्यनियन्त्रणेन वणिजो विरोधिनः संजाताः। प्रतिदिनमत्यावश्यकधान्य-वसननियन्त्रणेन सर्वाः प्रजा दुस्सहावस्थामनु-

भवन्ति । रा. स्व. संघविषयेऽनुदारवृत्त्या हिंदुत्वाभिमानिनश्चाश्चान्तचेतसो दृश्यन्ते । राज्यं धनिकानुकूलमिति समाजवादिनः प्रातिकूल्यमावहन्ति । साम्यवादिनः महान्तमातङ्कमुपजनयन्ति संघटिताः शस्त्रप्रतीकारेण । राज्यं प्रगतिपथाद्दूरीभूतमिति पुरोगामिपक्षः प्रतिभटीभूतः । महा—महाधिकारिष्वपि उत्कोचग्रहणलालसकिंवदन्ती सर्वत्र प्रसृता सर्वत्रानाश्वासपरिस्थितिं समुत्पादयति । सर्वत्र परोत्पीडनेनापि स्वार्थसाधनदुष्प्रवृत्तिः असत्यभाषण—प्रतारणाऽप्रमाणिकतादिदुर्गुणदुर्विलसितं सुशिक्षिताशिक्षितेष्वपि सममेव प्रतिष्ठां लभते । एवं स्वातन्त्र्यबालकजनन एव प्रादुर्भूता भूयस्यनर्थपरम्परा । किमयं मौहूर्तिको दोषः, उत कालमहात्म्यम्, अथवा नायकानामस्थानविश्वास-परिणामः । किं वा निर्वहणसामर्थ्यशैथिल्यविपाकः । आहोस्वित् स्वपक्षबलाव-लेपेनेतरपक्षीयमेधाविजनानां राज्यतन्त्रप्रवेशानास्पदताफलम् । अथवा सनातन-धर्मविद्रोहविस्फूर्जितम् । उत सच्छीलानामनन्यगतिकानां जनानामनादि-कालादुपभोग्यवृत्तिविच्छेदविजृम्भितम् । आहोस्वित् हठाद्विभ्रंशितपातिव्रत्यानां सतीनां फलच्छेदं विच्छिन्नानां शिशूनां च समुचितप्रतीकाराकरणखिन्नानां दीनाक्रन्दनविचेष्टितम् । किं वा देशभ्रष्टानां बन्धुजनवियुक्तानां ध्वस्त धनधान्य-संपदां प्रासादबहिष्कृतानां शीत—वातातपवर्षैर्भृशभार्तानामनाथानां दीनानां तपस्विनां च निर्वासितलोकानामभिशापप्रभाव इति न शक्यते वेत्तुम् । राज-कारणधुरन्धराः श्रीनेहरू—पटेलप्रभृतयः प्रधानपुरुषाः भारतस्य सुस्थितये प्रशान्तये रक्षणाय विदेशे गौरवाय सकलोपप्लवपरिहाराय निखिलसौविध्य-विधानाय च स्वसुखनिरपेक्षमहर्निशं प्रयतमानाः प्रभावशालिनो यदुपलब्धाः विषमेऽस्मिन्प्रसङ्गे, तद्भारतस्य महदेव सौभाग्यं मन्यामहे । अनन्यसामान्य-प्रभावभासुराणाममीषां निरलससततोद्यमेन विविधविपत्तिग्रस्तं भारतं सपदि-सकलसंकटमुक्तं पूर्ववैभवं समासादयेत्, स्वीयगरिम्णा जगति प्रथमगण्यता-सम्मानभाजनं स्यादिति बलवद्विश्वसिमः । सूचयामश्च सर्वश्रेयःप्रतिबन्धके धर्मविघातककर्मणि न मनोयोगो देयः, भारते देशहितैकतत्परैरितैरः सहयोगो विधेयः । येन सर्वेषामैकमत्येन विचारविनिमयेन सपदि राष्ट्रकल्याणसाधने वर्धेत सामर्थ्यम्, समुद्दिष्ट भारतोद्धारकार्यमपि सिध्येदचिरादिति ।

# सुरसरस्वतीसन्देशः

कुसुमशरसार्वभौमसामन्ते हेमन्ते प्रशान्तमयः निशान्तसमयः । तस्मिंश्च कामपाल इव घनतमोनीलक्षौमे, जलधरजाल इव चञ्चच्चामीकरचारुचपलास्तोमे, चण्डीपतिचूल इव संस्फुरद्बालसोमे सुरासुरसंग्रामकाल इव कौशिकनागाधिपसंचारभीमे मर्दितभामिनीभामे वर्धितकामिनीकामे मध्यमे यामिनीयामे तपस्विन इव विमुक्ताहाराः वर्षावासरा इव निष्पीड्यमानपयोधरमण्डलाः महाप्रासादा इव दृढसंश्लिष्टोरुस्तम्भा सुबन्धुकविप्रबन्धा इव श्लेषभूयिष्ठाः कान्ताधरासवलम्पटप्रणयिभृङ्गाः रतिवागुरानिपातितकामिकुरङ्गाः स्वेच्छाप्रवर्तितेन्द्रियतुरङ्गाः समुद्वेलितानन्दसागरतरङ्गाः श्रृङ्गाररसोत्सिक्तप्रणयिमिथुनान्तरङ्गाः अनङ्गनटराजनाट्यरङ्गाः प्रवर्तन्ते स्म रतिप्रसङ्गाः । यत्र च शीतलसमीरणपीडितानां शम्बरारिशरताडितानां विलासिनीनामङ्गेष्विव आननेष्वपि अलङ्कारशून्यतैवासीत् ।

तदा च दरिद्रजनता छिद्रांशुकधारिणी शैत्येन विद्रावितनिद्राकातरा, सुभद्रेव सन्निहितधनञ्जया, रावणसेनेव मारुतसंत्रस्यमाना, नन्द्यारूढभवानीव उभयकरदृढगृहीतवृषस्कन्धा पुण्डरीकपरिषदिव उष्णकरांशुकापेक्षिणी दुष्पद्धतिरिव विपुलकण्टकजालकाञ्चिता अकृतसुरतोद्यमापि शतधा क्षताधरपल्लवा सीत्कृतिसहस्रचिकृता चासीत् ।

अथार्धरात्रे स्तिमितप्रदीपे शय्यागृहे सुप्तजने अहमपि एकस्मिन् संस्कृतपत्रसम्पादकलभ्ये शरपञ्जरकल्पे कम्बलतल्पे लुठत्पाणिपादमूर्ध्नमुखः उच्छुष्कचक्षुः विचारचक्रभ्रमणभरभज्यमानशिराः चिन्तासंतानवितानैकतामानसः अस्वस्थः प्रचण्डझञ्झावाताकाण्डताण्डवाडम्बरक्षुभ्यदुल्लोलकल्लोलापारपयःपारावारोद्गच्छदसङ्ख्योत्तोललोलद्वीचिमालानीचीकरणनिपुणनैकभावनालहरीशतसहस्रनृत्तरङ्गायमाणान्तरङ्गः उद्विग्नः चिन्तामग्नः भग्नमनोरथः किंकर्तव्यता-

मौढ्यमभिपन्नः अशयिषि । चिन्तासीमन्तिनीसमाक्रान्तस्वान्तं मामालोक्य सापत्न्यरोषादिव सूदूरमेव पलायिष्ट निद्राङ्गना । केवलं मधुरवाणी-विचार एव अव्याहतं पौनःपुन्येन आवर्ततेस्म मेधातन्तुषु सवेगम् । "अहो कथं वा मधुरवाणी निरन्तरं प्रचलेदितःपरम् । तस्याः संस्थापकाः व्यवस्थापकाः संचालकाः संपालकाः संपादकाः श्री श्रीनिवासाचार्याः तां सुरभाषां साक्षादिव द्रष्टुं सुरलोकमेव प्रययुः । तैरेव कृतं (वाण्याः कृते) महद् ऋणं कथं वा प्रतिदेयम् ? तन्मरणानन्तरं व्यतीतेऽपि एकसंवत्सरात्मके ऽवधौ नैव नियतवेलं प्रकाशिताः संचिकाः । ततो रुष्टा वाचका तां यदि न ग्रहिष्यन्ति तदा कावा गतिः ? विद्यमानाः सर्वेऽपि ग्राहका यदि सद्य एव अनुग्रहिष्यन्ति तावद् धनमपि द्वादशाङ्कनिष्कासनाय नैवालम् । प्रतिमासम् त्रिशताधिकानि रूप्यकाणि अर्थात् प्रतिवर्षं चतुस्सहस्ररूप्यकाणामावश्यकता वर्तते मधुरवाणी-पूर्णप्रकाशनाय । इदानीं वाचकगणाद् लभ्यमानं धनं द्विसहस्रसंख्यामपि नोपस्पृशति । तर्हि कुतः संपादनीयाः कथं वा कुत्रवाऽऽर्जनीयाः द्विसहस्र-मुद्राः । किं कस्यचित् लक्ष्मीकटाक्षलक्षितस्य लक्षाधीशस्य कोशागारोल्लुण्ठनं कार्यम् ? अथवा भिक्षाटनमुत तावद्धनप्रापकयक्षिणीदीप-वेताल-मन्त्रतन्त्रादि-वशीकरणं वा ? किमिदानीमनुष्ठेयम् ? तावद्धनं मम क्षेत्रपात्रादीनामेव कुतः सर्वगात्राणामपि विक्रयेणापि नैव लब्धुं शक्यते । भिक्षाटनेन तु अखण्ड-भूमण्डलमेव आहिंडमानेनापि मया संपाद्यमानं संपादयिष्यमाणं वा धनं 'शाकाय वा स्याल्लवणाय वा स्यात्' नतु वाणीप्रकटनाय पर्याप्तं भवेत् । भारतीयास्तु श्रीमन्तः "निद्राति स्नाति भुङ्क्ते चरति कचभरं शोषयत्यन्तरास्ते" इत्यादि-निमित्तशतमुद्भाव्य संस्कृतपण्डितान् दूरादेव निवारयितुं जानन्त्येव सम्यक् । अथवा कुतो वा वितरन्ति ते द्रव्यं संस्कृतपत्रिकाणां कृते । संस्कृतप्रसारणं नाम न खलु कानीनकुमाराश्रमस्थापनं, नवा हरिजनोद्धरणं, न सौभाग्यवती-सुभगचूर्णकुन्तलकर्तनालयोद्घाटनम्, नैव विधवाविवाहसंस्थासंस्थापनम् । तर्हि कुतो वा वृथा दद्युस्ते कुबेरकुमाराः कपर्दिकामात्रमपि । नैतेन संस्कृतार्थे

द्रव्यदानेन सभासंमेलनेषु यथेच्छं पुष्पगुच्छहारोपहारप्रदानपुरस्सरं स्तोत्र-पुष्पवृष्टिः भूलोकविद्याधरैरनुष्ठीयते, न वा वृत्तपत्रेषु स्वीयानि वक्रतुण्डानि पुण्डरीकखण्डानि चन्द्रबिम्बप्रतिबिम्बानीति अतिशयोक्ति–अथवा–विपरितोक्ति मुक्ताफलैर्वर्णनपुरस्सरं प्रकटीक्रियन्ते। नाप्यनेन सर्वेकाराधिकारिणामुपरि कोपि हितावहः परिणामः जायते। अत एव ते कर्णशिशवः त्रुटितैकवराटि-कामपि वराकायाः विबुधवरवाण्याः कृते व्ययीकर्तुं न मनागप्युत्सहन्ते। एवं च तदाशैव नास्ति। नास्ति चान्योपायः, येन प्रभूता भूतिरासाद्येत। द्रव्याभावे अक्षरयोजकाः मुद्राराक्षसेश्वराश्च मम शिखासीतामेव गृहीत्वा लम्बकर्ण–कुम्भ–कर्ण–युगमुद्धूल्य पीडयिष्यन्ति। कथं वाऽयं शोकसिन्धु-र्हनूमद्वद् उल्लङ्घनीयः? प्रतिदिनं "कुतो वा वाणीसंचिकाः नागताः? इति नैकान्येव मम हृदयक्षेत्रखनित्रानि पत्राणि शतशो आगच्छन्ति। Please send Madhurwani इति विद्युतन्त्रीद्वारा प्रेषिताः संक्षिप्तादेशाः विद्युदा-घातमेव कुर्वन्ति। केषांचित् कवित्वव्यसनिनां महानुभावानां काव्यमयी वाणी "सुप्ता किं नु मृता नु किं क्वचिदियं लीना विलीना नु किम्?" इति प्रश्नमालिका न केवलं क्षते क्षारमेव क्षिपति, परंतु क्षते आशुशुक्षणिसन्धुक्षण-मेव विधत्ते। तेषां किमित्युत्तरं देयम्? किंवा कर्तव्यम्? का वा गतिः? को वा उपायः? इत्यनेकदुरन्तचिन्ताशतैर्वैयग्र्यं महतीमधिगत्य नितान्तता-न्तस्य मे "अविदितगतयामा रात्रिरेव व्यरंसीत्।" परितः प्रसुप्तपरिवार-जनस्य मुखनासिकादरीगृहद्वारनिर्यद्घुर् घुर् घुर् इति घोरघुर्घुरारावः निशायाः गंभीरमौनमवभिद्य विचारधाराविघ्नमुत्पादयति स्म। शतधा सहस्रधा विहितेऽपि विविधविचारे न एतत्समस्यापरिहारप्रकार एव न प्रास्फुरत् प्रतिभादरिद्रे मम विचारकुण्डे मेधःपिण्डे। तदा च प्राभातिकः शीतो वातो वातुमुपाक्रमत। तदा चाहमपि रात्रिजागरणक्लान्तकलेवरः मन्दं मन्दं स्पन्दमानसुगन्ध गंधवहस्तनन्धयेन ग्लानिसहोदरीं कामपि उत्स्वप्नदशामवागाहिषम्।

शिष्टमग्रे

———

॥ श्रीः ॥

# कर्नाटकस्थशास्त्रिप्रवरेषु विज्ञापना

इदानीं मोहमयीविद्याधिकारिमण्डलेन संस्कृतशास्त्रिणः तत्तदांग्लमाध्यमिकशालासु संस्कृताध्यापकत्वेन स्वीकृत्य यद्वेतनं ट्रेंड म्याट्रीकोत्तीर्णेभ्यो दीयते तदेव तेभ्यः शास्त्रिभ्यो दातव्यमिति निर्णितमेत्र। तद्वत् परप्राप्तेषु च दीयते च तेभ्यः सादरम्। किन्तु कर्नाटकस्थांग्लशालासु प्रायः सर्वत्र तान् शास्त्रिप्रवरान् अध्यापकत्वेन स्वीकर्तुं तेभ्यः तद्वेतनं प्रदातुं न सम्मन्यन्ते तत्तच्छालाधिकारिणः, इति खेदास्पदमेतत्।

अतः कर्नाटकस्थाः विद्वान्–शिरोमणि–तीर्थ-आचार्य-शास्त्रीत्यादि पदवीभाजः, सतताभ्यसिनः संशिक्षकाश्चैकमत्येन एकत्र मिलित्वा कर्नाटक संस्कृतशास्त्रिणां संघं संस्थाप्य तद्द्वारा यथा संस्कृताध्ययनस्य सं. शास्त्रिणां च संमानं लभ्येत तथैव प्रयत्नः कर्तव्य इति निश्चितमस्माभिः। अतः सर्वे संस्कृतपदवीधराः संस्कृताभिमानिनश्च शिक्षकाश्च सत्वरं सदयं च आत्मनः संकेतपुरःसरं स्वस्वाभिप्रायं च पत्रद्वारा संप्रेष्य महतोऽस्य कार्यस्य साहाय्यं कुर्युः इति शम्।

भवदीयः

रा. न. सांगली,

काव्यतीर्थः,

मधुरवाणी कार्यालयः, बेळगांव.

---

# " कटुजस्य मुखात् चित्रं प्रदिम्ना मधुरागिरः "

भारतीयनेतृषु बहूनामेव प्रमुखानाम् आंग्लभाषानिर्गमनानंतरं सुरगिरमन्तरा राष्ट्रभाषाधुरं वोढुं न काचिदप्यन्या भाषा समर्था इति निश्चितज्ञानं वर्तते । अथापि तथा स्पष्टं वक्तुं केषांचित् धैर्यं न भवति । अन्ये च केचित् इतरभाषाणां राष्ट्रभाषाधुराधारणदौर्बल्यं दृढं जानन्तोपि गीर्वाणगिरः तादृशभारोद्वहनाक्षामक्षमतामवगच्छन्तोपि आत्मनः संस्कृतज्ञानवैकल्येन स्वप्रतिष्ठाभङ्गो भवेदिति भिया संस्कृतस्य राष्ट्रभाषात्वं विरुन्धन्ति । एवं सर्वेऽपि नेतारः यथार्थमपि सूर्यप्रकाशस्पष्टमप्येतत्सत्यं कटु इति वक्तुं व्यक्तीकर्तुं वा संकुचन्ति । परं इदानीं च वंगप्रांताधिपतिः श्री कैलासनाथ कटजू महोदयः घन्टाघोषमावेदयति यत् " संस्कृतमेव भारते राष्ट्रभाषा भवेत् । नान्यस्याः कस्याचिदपि तादृशी योग्यता वर्तते । हिंदी बहुजनभाष्यमाणापि राष्ट्रभाषा भवितुं नार्हति । यतोहि राष्ट्रभाषेत्यस्य केवलं विपणिभाषा रजक नाविक नापित चर्मकृद्भाषेति वा नार्थःपरं राजकीय सामाजिक नैतिक धार्मिक शैक्षणिक सांस्कृतिकोच्च विचारवाहिनी भूताभाषेत्यर्थः । सा च अपारशब्दराशिभाण्डागारायमाणा अनन्तग्रन्थरत्नसंपन्ना संस्कृतभाषैव तथाविधराष्ट्रभाषा भवितुमर्हा नान्या काचिदपि " इति वृत्तपत्रेषु सभासंमेलनादिषु च तदेव प्रमाणपरंपरोदाहरणपुरस्सरं प्रतिपादयति प्रस्थापयति च । सर्वेप्यन्यप्रान्तीयाः मंत्रिणः प्रान्ताधीश्वराश्च तदध्वन्यध्वनीनाभवेयुः तदाऽचिरादेव स्वतन्त्रभारतस्य गृहेगृहे अमरगवीसाविराजेत । तत इदं भारतं रामराज्यमेव । कालिदासोक्तौ वक्तव्यं चेत् " महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैंद्रमेव । "

---

# काचन सूचना

मोहमयी सर्वकारेण आगामि वर्षत आरभ्य आंग्लशालासुक्रमेण तृतीयकक्षापर्यन्त मांग्लभाषाध्यापनं नैव कार्यमिति निर्णीय निर्धार्य प्रकटीकृत्य च प्रसंगावधानं समयोचितेतिकर्तव्यताधीजागृतिश्च आत्मनो व्यक्तीकृता। वस्तुतो विजातीय विदेशीय क्लिष्टतमांग्लभाषाया बलात्कारेण अध्यापनेन दूरेस्तु तावल्लाभः प्रत्युत महती एव कालहानि रर्थहानिः उत्साहहानिश्च। कुतो वा भ्यसनीया सर्वैरपि अस्मद्बालकैरवश्यं सा भाषा, या नस्माकं राजभाषा न राष्ट्रभाषानैव प्रजाभाषा न वा मातृभाषा नापि यस्य कस्याचिदपि भाषा। कुतश्च अस्मत्संततेरमूल्यमेधाशक्तिरस्थाने व्ययीकर्तव्या सुदीर्घकालश्च वृथा क्षपणीयः। अतो यदत्र दूरदर्शिना सर्वकारेण प्राथमिक कक्ष्यासु आंग्लभाषाभ्यासः प्रतिबद्धः तदेतदालोक्य को न ब्रूयात् "अयमुत्तरः पक्षः" इति। परंतु इदानीं प्रश्न एव वर्तते यत् आंग्लभाषाभ्यासविलोपे माध्यमिकशालासु तत्स्थाने तद्वेलायां छात्राणां किं वा शिक्षणीयं? तदत्रवयमेवमभिप्रेमः—इतर गणितविज्ञानेतिहासभूगोलादिविषयाणां प्रवेशपरीक्षासमुत्तरणपर्याप्तं ज्ञानं यथापूर्वं चतुर्थकक्ष्यात ऊर्ध्वमध्ययनेनापि सुलभमधिगन्तुम्। मातृभाषाध्ययनार्थं प्रथमकक्ष्यात आरभ्य प्रवेशपरीक्षापर्यन्तं प्रत्येकावकाशः कल्पितो वर्तत एव। परंतु चतुर्थकक्ष्यातः संस्कृतस्य शिक्षणमारभ्यते। पुरस्तात् इतराभ्यास बाहुल्यात् अस्य च क्लिष्टत्वात् छात्रा सप्तमकक्ष्यागं गता उत्तीर्णा वा पर्याप्तं संस्कृतज्ञानं नैव विन्दन्ति। अतो वयं सादरं संसूचयामः यत् संस्कृतशिक्षणं माध्यमिकशालासु प्रथमकक्ष्यात आरभ्यैव आंग्लभाषास्थाने तदवधौ प्रारम्भणीयम। तर्ह्येव छात्राः प्रवेशपरीक्षासमये पर्याप्त संस्कृतज्ञानवन्तः संपत्स्येरन्। एवं सप्तवर्षाध्ययनेन बालाः सं. साहित्यव्युत्पन्ना एव भविष्यन्ति। ततः पुरस्तात् विश्वविद्यालयेषु शास्त्राभ्यासः सुकरः भवति। विज्ञान वैद्यकौपयोगिकादि विविधशाखान्तराभ्यासकानामपि भारतीयपारिभाषिकशब्दज्ञानार्थं

नवशब्दनिर्माणार्थं च महदेव साहाय्यं भवति । किं चेदानीं सर्वैरपि सर्वकारैः स्विकारयिविता मातृ–राष्ट्रभाषोन्नतिरपि अनायासेनैव सहजतयैव खलु संभवित्री । दाक्षिणात्यानां संस्कृत ज्ञानं विना हिन्दीज्ञानगन्धोपि दुश्शक एव । सम्यक् संस्कृतज्ञानेन केवल राष्ट्रभाषाज्ञानं मातृभाषापाण्डित्यमात्रमधिगन्तुं शक्यते इति न परंतु मराठी गुजराथी बंगाली प्रभृति प्रातिवेशिक भाषाणामपि अत्यन्तम् आवश्यकानां ज्ञानमासादयितुं शक्यते । एवं सर्वदृष्ट्या विचार्यमाणे माध्यमिकशालानां प्राथमिकेयत्तासु प्राथमिकशालानामुत्तरकक्ष्यासु च वयनसीवनकर्षणो छनवपनत्वाष्ट्र चर्मकर्मादि शिक्षणापेक्षया परमपवित्र पूज्य संस्कृतशिक्षा एव हि साधीयसी गरीयसी प्रेयसी श्रेयसी च । अतः सत्वरमेव सर्वकारीयशिक्षाशाखाशासकवर्गः एतदनुशासनं करोत्वित्याशास्महे ।

—०—

# देशसेवकः

## प्रथमाङ्के द्वितीयदृश्यम्

( देवालये कुत्रचिदुपविष्टाः केचन सम्भाषन्ते )

प्रथमः— वयस्य,

जयसिंहनामकोऽसौ परिपन्थिविभीषणो वीरः ।
अतिविपुलयशाः सर्वानस्मान्हिंसन्नृपाय ( राज्ञे शिवाजये ) विद्वेष्टि ॥ १॥

जगदवनवितन्द्रा दुष्टशिक्षैकताना ।
जयति जितरिपूणां देवतोपासनीया ॥
यवनकुलविनाशोद्युक्तवीरावतंसा ।
नवतु शिवनरेन्द्राद्यानशेषान्भवानी ॥२॥

द्वितीयः— वयस्य, भवानीप्रसादभूम्नैव विस्मयजनकान्युपायजाता-न्यवलम्ब्य विविधा विपत्तीरुत्तरन्ति नः प्रसृ.रदुराचारप्रवणयवनलोकविध्वं-सनदीक्षागुरवः प्रबलावलेपभारशात्रवकुलोच्छेदसाहसिकाः वीरवरेण्याः। अफ़ज़ुलखानप्रभृतीनपि महाबलानपरिमितसेनासागरसमेतानविगणय्य पराभूत-वतः स्वतंत्रभारतीयसाम्राज्यस्थापनाभिलाषिणो नः शिवराजनामकान्सुकृतप-रिपाकमिव महाराष्ट्रदेशीयानामनुग्रहीष्यत्येव भक्तरक्षणश्रद्धालुर्भगवती भवानी। कपटोपायानाश्रित्यादपि हन्त प्राप्तव्या विजयलक्ष्मीः, यदाहुरभिनवराजनीति-विशारदाः—

शठे शाठ्यं तावद्बहुमतमधर्मं न जनये- ।
दुपायांश्चाणक्यप्रभृतिभिरकीर्त्यन्त तदमी ॥
विपत्तिर्जन्तूनां प्रशमयति मौढ्यं कुशलतां ।
प्रदत्ते कार्येषु प्रथयति च सिद्धिं सुविपुलाम् ॥३॥

अनुसन्दधानश्च वारंवारमफ़ज़ुलखानस्याशेषजगद्विस्मापकं वधमतीव प्रशंसनीया नो जगदवनवितन्द्रा भवानीदेवीति भक्तिमतामग्र..ण्यो भवामि ।

प्रथमः— प्रियमित्र, अलमतीतवृत्तान्तप्रस्तावेन । प्रकृतदुरवस्थां विमृ-शतः पुनर्मम सहस्रधा स्फुटतीव हृदयम् । हिन्दूकुललब्धजन्मानोऽपि नीचयवनशुश्रूषणपराः किलेमे दुर्वारदोर्वीर्यखण्डितप्रचण्डारातयो जयसिंहा-दयोऽपि स्वराज्यस्थापने प्रतिबन्धमाचरन्ति। अन्योन्यवैरप्रणाशितकल्याणा हि भगवती भारतभूमिरुद्दिधीर्षिता समरसमारम्भभयङ्करदोराडम्बरवित्रासितशात्रवा-नीकेन दीनजनतामनःखेदापहारिचरितेन श्रीमता शिवनरेन्द्रेण । जननभूमि-मकृत्रिमेण प्रेम्णा परिचरमेष वीरकुलावतंसः कथङ्कारमपायादस्मात्परिपाल-यिष्यते भगवत्या भवान्या ?

द्वितीयः— तानाजिप्रमुखा विरोधिरुधिरासिक्तैः कृपाणैरमी ।
घोराकारकरालराक्षसवधूवैधव्यदीक्षागुरोः ॥

देव्या नीचविनाशकारिणमथ प्राप्ताः प्रसादं परं ।
शत्रूणां समराङ्गणे प्रमुदिता नाशं पुरा कुर्वते ॥४॥

प्रसिद्धपराक्रमा हि तानाजिप्रभृतयः पराक्रमिणः प्रापयिष्यन्ति शत्रुजातं शमनभवनम् । वि॰ासलोलाः किल लुप्तविवेकाः प्रणष्टधैर्या वीर्यविहीनाः पापात्मानो यवनाधमाः प्रवलसमरकोलाहलानां विलसद्दीपणायुधभूषणाना (आयुधान्येव भूषणानि येषाम्) माकर्ण्यैव माहाराष्ट्रीयाणां सैनिकानां सिंहनादमुपजातभीतयो विद्रविष्यन्ति । वीररसपरिपोषायेव सैनिकधैर्याभिवर्धनाय नासीराग्रेसराः प्रख्यातारिपुसेनोच्छेदनैपुण्यास्तानाजिप्रभृतयस्संचरिष्यन्ति करालकरवालधारिणः परिहापितदुरहङ्कारेषु यवनसैनिकेषु निक्षिपन्तः क्रोधकलुषां दृष्टिम् ।

प्रथमः— सखे, महावीराणां शिरोमणयोऽपि तानाजिप्रमुखाः स्वामिभक्तिपूतान्तरङ्गा देशप्रेमिणो न तावत्पारयिष्यन्ति परिमितसंख्याकैस्सैनिकैरनुसृता महत्या जयसिंहस्य विलासलोलुपयाऽप्यालस्यदुर्बलयाऽपि विहीनोत्साहयाऽप्यपरिमितयाऽनीकिन्या साकमायुध्य विजयलक्ष्मीं प्रणयकुपितामिव मानिनीमकृतापराधायाऽपि प्रेयसे जनाय प्रसादयितुम् । वलवानपि वहुभिर्विरोधमाचरन्नचिरेण प्राप्स्यते पराभवमिति सूनृतैवैषा गीरार्यमिश्राणाम् । वीरशिरोरत्नान्यपि तृणीकृतप्राणा अपि कथङ्कारमवाप्नुवते नाम विजयमास्माकीनास्सैनिकाः ? अम्ब भगवति भवानि,

स्वराज्यस्थापनोद्योगं सफलीकुरु नः प्रभोः ।
जयसिंहमहाराड्डुः शिवराजं विमुञ्चतु ॥५॥

(शिवराजः— शिवौ नाम नृपतिश्चन्द्रश्च)

जय जननि भवानि लोकमान्ये ।
जगदवनपरे विशुद्धभावैः ॥

मुनिभिरभिनुते शिवाजिराजं ।
प्रशमितकलुषे प्रपालयस्व ॥६॥

द्वितीयः— महेश्वरसधर्मिणीमखिलभक्तभद्रङ्करी ।
मभीप्सितफलप्रदां प्रणिदधामि ( प्रार्थयते ) देवीं पराम् ॥
शिवप्रभुमव व्यथाहरणमस्मदिष्टप्रदं ।
स्वराज्यपरिरक्षणप्रवणमुत्तमं भूपतिम् ॥७॥

भारतीयधर्मरक्षणैकवीरमादरा- ।
द्ब्राह्मणावनोद्यतं शिवाजिराजमुत्तमम् ॥
देवनायकोपमं विराजदिन्दुमण्डला ।
टोपहारिवक्त्रमाशु पाहि देवि पावनि ॥८॥

प्रथमः— शिवाजीराजं परिपालयंस्त्वम्- ।
न्भवानि रक्षिष्यसि भूसुरोत्तमान् ॥
विरोधिनाशेन कुरुष्व मङ्गलं
स्वदेशभक्तस्य शिवाजिभूपतेः ॥९॥

( नेपथ्ये कलकलः । शिवराजः तानाजिरेसाजिरन्ये च प्रविशन्ति )

शिवराजः— ( प्रथमं पुरुषमुद्दिश्य ) वयस्य, भवादृशानामेव निर्व्याजभक्तियुक्तानामप्रतिमदेशप्रेम्णामनुग्रहेण लभमानो विजयानवाप्नोमि विपुलां कीर्तिम् । वस्तुतस्तु प्रशंसनीयाः सन्ति स्वतंत्रराष्ट्रनिर्माणधुरीणाः पापकर्मणाममीषामस्मद्विद्वेषिणामतीव भयङ्करा भवादृशा एव कृतकृत्याः पुण्यकर्माणः । पराभूयाऽपि समिति वीरानस्मान्न जातु राष्ट्ररक्षणस्तम्भानिवैकमत्येन विरुन्धानानेतानपि विजेतुमलम्भविष्यन्ति विद्रोहिणो नीचाः । ( इति परिष्वजते )

प्रथमः— महानुभाव, कस्त्वमसि, यस्य ते स्पर्शमात्रेण पुरुषस्याऽपि मे कर्कशशरीरस्य सञ्जातरोमाञ्चा व्यञ्जयति तनुरमन्दमानन्दम् ।

शिवराजः— प्राणेभ्योऽपि प्रियतर निर्व्याजबन्धो, यस्य कृते भगवतीं भवानीमभीप्सितसिद्धिकरीमभ्यर्थयसे सोऽहमस्मि भवादृशै राजभक्तैस्साधुजनैस्सनाथो भवतां नाथो जीजाबाम्बागर्भसम्भवः शिवाजिर्नाम ।

द्वितीयः— प्रियवयस्य,

परीवर्तौ मूर्तस्सुकृतपरिपाकस्य महतो ।
महाराष्ट्रस्थानामयमुदयते चण्डकिरणः ॥
शिवाजिर्वीराणामधिपतिरभिष्वङ्गमतुलं ।
महाराजानामप्यसि हि सुकृतिनामग्रग इह ॥१०॥
अनितरलभ्यमवाप्तवान् शिवाजे ।
रपरिमितां मुदमादधानमेतम् ॥
सुखपरिरम्भमतीव जातगर्वः ।
किमिह न संलपसि प्रकृष्टपुण्यः ॥११॥

शिवराजः— अयि राष्ट्रोद्धारबद्धकङ्कणानामग्रेसरा वीरवरेण्याः,

अभिष्वङ्गात्सौख्यं यदि भवति सर्वस्य जगतः ।
प्रमोदायाशेषानपि परिरभेयाहमनधाः ! ॥
विवादो व्यर्थोऽयं जगदवनदीक्षागुरुममूं ।
भवानीमाराध्यामहितशमनीमाशु नमत ॥१२॥

(इति वदन्द्वितीयमप्याश्लिष्यति सर्वे भवानीं प्रणमन्ति)

शिवराजः— स्वराज्यस्थापनाभिलाषुकस्यमे समुचितसहकार ( Co-operatiov ) विहीनस्याऽपि स्वाभाविकराजभक्तिनिर्मलचेतसाममीषामकलुषिताशयानामभिमतस्य वीरशिरोमणीनामधिनायकस्य दयमानया भगवत्या भवान्या भवितव्यतामप्यतिक्रन्तुमलम्भवित्र्या प्रसादविलसद्वदनारविन्दया नीचविद्रोहिविनाशकारिण्या महिषासुरमर्दनव्रतानुष्ठानं पुनरुक्तयितव्यमस्ति ।

(इति प्रणमति)

सर्वे- जय जगदम्बिके भवानि, जय जगदम्बिके ।

शिव- तानाजे, अपि मंत्रदृष्टमर्थमनुसन्दधाना मंत्रिणः शीघ्रमागमिष्यन्ति ?

तानाजिः- अचिरेणैवागमिष्यन्ति । प्रभो, रामदासस्वामिभिरेकं पद्यमनवधिकप्रमोदकारि विरचितमस्ति, तत्किमत्र गातुमनुमन्यते भवान् ?

शिव- वयस्य, मा स्म मामसमर्थं समर्थरामदासस्वामिना परिचरणे प्रभुपदमधिष्ठापयः । आचार्यवर्याणामुपदेशामृतं श्लोकरूपमुत्कण्ठेऽहं श्रवणाञ्जलिना निपातुम् ।

ताना- यवनकमलिनीनामाशुकीर्तिं विलुम्पन्नुदयति शिवराजो राष्ट्ररक्षैकवीरः।

कवलितरिपुसंघातान्धकारो महीयानवनमितसमस्तारातिराराधनीयः ॥१३॥

शिव - तानाजे, सत्यमेव कृतकृत्यो विजयिनामग्रेसरो विद्वेषिविभीषणोऽस्मि राष्ट्रपालनकलाप्रवीणोऽहं शिवाजिर्यस्य मे भगवन्तो रामदासस्वामिनः शिष्यकोटिपरिरक्षणबद्धश्रद्धा महात्मानो गुरुपदवीमध्यासते ।

असमर्थभक्तवृन्दोद्धारपरं रामदासनामानम् ॥
गुरुवरमनुचिन्तयते करुणाकूपारमादराद्धृदयम् ॥१४॥
शिष्यकोटिविपदां प्रणाशकं रामदासमनुचिन्तयन्मम ॥
भूरिदोषमपि चित्तमद्भुतं हन्त शान्तिमधिकामवाप्नुते ॥१५॥

तानाजिः- यस्य किल कपटोपायविशारदः कूटनीतिचातुरीधुरीणो यवनसाम्राज्यस्थापकानामवाप्तजन्मा महति महात्मनामैकमत्यसाधनपराणां मतविद्वेषवीजावापादतीव विभ्यतामार्याणामक्वरादीनामन्ववाये भारतीयसनातनधर्मनिर्मूलनाभिलाषी बहुलदुराचारदुष्टतुरुष्कपक्षपाती हिन्दूजातीयजनतासन्तापहेतुरौरंगजेवोऽप्यवेक्ष्य विस्मयते परमरमणीयामनितरसाधारणी मुन्मिषद्यौव-

नारम्भमधुरां राजनीतिनिपुणताम्, यं च पुनराहतशात्रवानीकमभिमुखमतिविस्मितानां स्वभटानामप्रमेयपराक्रमं प्रशंसंति प्रकृतयस्सर्वाः प्रणामप्रसादनीयं राजानम्, यत्रनराज्यलक्ष्मीरपि भीतभीतेवाश्रयोच्छेदशङ्कया मन्दंमन्दमवधीरयद्भिर्मत्तपातङ्गगमनसौष्ठवं पदन्यासैरुपाश्रयति यमेव चारुजातरुपमय चामीकरविकारभूषणैरनलङ्कृतशरीरमपि मनोरमाकारम्, यस्यैव च गुरवोऽपि पक्षपातशून्यास्समर्थरामदासस्वामिप्रभृतयः परमे व्योम्नि प्रतिष्ठितं तत्त्वमवधारयन्तो महात्मानो वर्णयन्ति कल्याणानेवमीदृशानगणेयान्गुणान्स हि शिवराजो नाम नराधीश्वरः प्रणतसामन्तनृपतिमुकुटमणिप्रभारञ्जितपादाम्भोजद्वन्द्वो विजयते ।

प्रथमः-- अविज्ञातनामाऽपि वास्तविकविषयवर्णनपटुः प्रशंसनीयो भवान् ।

तानाजिः - वयस्य, तानाजिनामकं माममुष्य राज्ञो भृत्यपरमाणुमवबुध्यस्व ।

शिवाजिः– प्रियमित्र एसाजे, नेताजीपालकरप्रभृतयश्च वीराः, प्राप्तनिदेशा अप्यद्यावधि कुतो वा नागच्छन्नस्माकमनुल्लंघितचराज्ञावचनाः कृत्यमेतदात्ययिकमवगच्छन्तोऽपि मंत्रिणः ?

( नेपथ्ये पदध्वनिः । मंत्रिणस्सर्वेऽप्यागच्छन्ति )

शिवराजः— ( अग्रतः पश्यन् ) आगता एवेमे मंत्रिणः । तत्सर्वे तूष्णीम्भावमवलम्बन्ताम् ।

प्रधानमंत्री— शिवप्रभो, जयसिंहराजस्य सेना तावदत्यधिकेति दूतैरावेदितम् । दिलेरखाननामा कोऽपि तुरुष्कजातीयो महाराष्ट्रदेशस्येव परिपक्वं दुष्कृतजातमा गतवानस्ति सेनापतिरित्यपि विज्ञापनीयोऽस्ति चारदृगपि विचारदृग्भवान् । ततत्रासांप्रतस्संप्रति सांपरायिकस्संरम्भः । अन्तर्भेदजर्जरा-

णामनीकानामनायासेन विजय्यतामभिसंहितव्रता चाणक्येनाऽपि भेदोपाया-वलम्बनमेव श्रेयस्करमित्यरोचि। तस्मादधुना वेषान्तरधारणपटुभिराख्धव्यो विप्रलम्भनकलापारावारपारीणैरास्माकीनैर्गूढचारैर्भेदोपायप्रयोगः। सहजनिर्द्वेषाम्यसूयो हि दिलेरखानो जयसिंहविषयकानसत्यवृत्तान्तानविमृश्यकारितया विश्वस्यात्। तदेवमवलम्बमाना भेदोपायमन्तरेणैव समारम्भमवाप्स्याम। समीहितानि ॥

द्वितीयमंत्री— महाराजाधिराज शिवप्रभो, जयसिंहसदृशेषु महाबलेषु परिचितराजनीतिषु करतलामलकीकृतकुटिलनीतिरहस्येषु प्रयुज्यमानोऽपि भेदोपायो न तावत्साफल्यमधिगच्छेदिति तर्कयन्नस्मि भृशं विषण्णः। नाना-युद्धेष्वपराजितो हन्त विलुप्तविवेकः किमसौ मूढमतिरित्यवगण्यते जयसिंहः, यदेनमवाप्तानुभवमधिगतकपटोपायमूलतत्त्वमपि प्रतारयितुमिच्छन्तः परिहास-पात्राणि बुभूषन्ति मंत्रिणः।

शिव— सचिववरेण्याः, मयाऽपि निद्रापरवशेन ह्यो दृष्टः कोऽपि स्वप्नः। विदितमेव किल भवतामेतद्यदापत्तिष्वेतादृशीषु जातानुकम्पा भगवती भवानी स्वप्नदृष्टान्तमुखेन प्रबोधयति मामनन्तचिन्तासन्तानसन्दानितान्तःकरणमकृत्रिमप्रेमभारेण समुपागतामिव भक्तश्रेष्ठम्। मध्येकाननमलब्धपानोचित सलिले मयि तृषापरिदूयमानमानसे विचरति झटित्याविरासीद्विवृताननः कश्चन व्यात्ताननइवान्तकः केसरी मे पुरतः, यमहमशनायाबाधितोऽपि भयङ्कराकारमवेक्षमवेक्षमुपचितभीतिरायुधपाणिरपि तूष्णीम्भावमवालम्बे। उद्यातायुध-मप्यप्रहरन्तमकातरो मामवलोक्य भीषणकृतान्तघोररूपोऽसौ मानुषीमेव गिरमुदैरयत्—कोऽसि किङ्कुरुष इति। नाहं किङ्कर इति कोपपाटलमुखः परिशुष्कतालुरपि स्वाभिमानादवोचम्। गर्जता च पञ्चाननेन दूरमाकृष्टमिवा-त्मानमलक्षयम्। विलुप्तप्राया च मे बभूव पिपासाकुलस्य प्रज्ञा। आगतप्रज्ञे च मयि गुहा काचन नानाविधान्यासनान्यध्यासीनैर्वृकैः शार्दूलैरतिभयङ्करा-कारैर्वराहैश्च गर्जद्भिरनेकैः केसरिभिरुपास्यमानेन सौवर्णपीठमध्यमधितिष्ठता

Funding: Tattva Heritage Foundation,Kolkata. Digitization:



मृगाधिराजेन केनचित्स्थविरतरेणाध्युषिता न्यशाम्यत। कनकपीठोपविष्टस्य स्थविरकेसरिणो निदेशादहमन्यस्यामन्धकारावृतायामपाल्ये भीषणायां गुहायाम्। तत्र च भक्तरक्षणप्रणयिन्यां भवानीदेव्या अनुग्रहेण लब्धमार्गो यथाकथंचिन्निष्क्रम्य गुहामुखात्तस्मादस्मि पुरीमस्माकमुपागतः। क्षणादेव च व्यरमन्मे स्वप्नः। उत्तिष्ठन्नेवावलोकयमुपात्तपुष्पमालिकामुन्मीलन्मधुरस्मितविकसद्वदनारविन्दां जननीम्, यां पुनरकथयन्त्यपि कारण मतीव मां पर्यहसत्। स्वप्नवृत्तान्तमभिदधति मयि प्रहर्षोत्फुल्लनयना जननी मे समभाषत—पुत्रक, भवानीप्रसादेन संनिहितामापदमनवाप्तदुःखस्समुत्तरिष्यसि। कंचित्कालमुपलभ्याऽपि बन्धनं शत्रूणामावासे, भगवत्या भवान्याः निरवग्रहेणानुग्रहेणोपायान्तरेणास्माकं जन्मभूमिमागमिष्यसि” इति।

तानाजिः— जन्मभूमिमागमिष्यंत्येव नः प्रभवः, कुत्र पुनर्गमिष्यन्तीति नाहं जाने।

प्रथममंत्री—जयसिंहेन सार्कं संधाय (साधिकृत्वा) यवनाधिपतेरवलोकनाय देहलीनगरं गन्तव्यमापद्येतेति राजनीतिनिपुणाया जीजामातुस्तर्कः।

तानाजिः— समरमारभ्य पराजेयाः पापकर्माणो यवना इति निवेदितमःसीयदल्पज्ञेनाऽपि मया, तत्किमुपेक्षितमेव संधित्सुभिर्मंत्रिभिः?

द्वितीयमंत्री - प्रकृतपरिस्थितिं सम्यमनवबुध्यमानो मा स्म भवान्किमपि किमपि परिप्राक्षीत्। अधिकसंख्याका हि नायकमवाप्य दुर्वारगर्वनिर्वापणचतुरं जयसिंहमपेतसाध्वसा यवनसैनिका न विजय्या इत्याकर्णितमस्माभिर्दमुखेन।

तानाजिः— शस्त्रविद्यायामिव वेषान्तरधारणादावप्यस्मि चतुरोऽहं सेनापतिः। तदादिशन्तु मामनल्पसंकल्पाः शिवप्रभुवरेण्याः, शीघ्रमेव प्रधान मंत्रिणामभिप्रायमनुरुन्धानो दिलेरखानं जयसिंहस्य प्रधानं शत्रुं परिणामयिष्यामि।

एसाजिः— गृहीतयवनसैनिकवेषैरस्माभिराप्तसेवकैरिव दिलेरखानस्याभिनयद्भिरभीहितसाधनैकदत्तदृष्टिभिर्भवितव्यम् ।

शिव— प्रियवयस्ययोस्तावत्साहसमेतादृशमिति न केनाऽपि वक्तुं शक्यते । एवमपि जाग्रत्सु समुचितभूमिका (वेष) न्तरधारणपटुषु वीर्यविहीनतया समरभूमावनुपयुक्तेषु च कपटनीतिनिपुणेष्वन्येषु गूढचारेषु, किमिति वृथैवायासयितव्य आत्मा ?

तानाजिः— यदि हि सांपरायिकस्संतोषप्रदस्संरंभस्संगृहीतसेनिकैस्समन्वज्ञायिष्यत भवद्भिस्तर्हि पर्यत्यक्ष्यमहमपि वेषान्तरधारणचापल्यम् । यथाशक्ति देशसेवां चिकीर्षुणा मया समीहितसाधनाय साहसिकेनैव भवितव्यम् ।

एसाजिः— श्रीशिवराजनिदेशनाहमपि परकटकमनुप्रवेष्टुमभ्यर्थये ।

शिव— एसाजे, मम निदेशमननुवर्तमानो हि तानाजिरेष दुर्विनीतो गच्छतु नाम मामेतदवस्थमपि परित्यज्य धनलोभेन जयसिंहम्, भवांस्तावदनालिप्सित यवनसेवाधिकारो मामेवोपतिष्ठताम् ।

तानाजिः— राज्यपरिपालनार्थं धनमवश्यं संपादनीयम्भवतीति लुब्धकानां ग्रामव्यस्संवृत्ताः प्रभवः । मां पुनर्धनलोभेन यवनसेवामभिलष्यतीति परिहसन्ति । सत्यमीदृशे विषये दुर्विनीतोऽहमस्मि, यं पुनरधिकारलोभेन यवनानीमभ्यस्यन्तमप्युपेक्षाञ्चक्रिरे चार-चक्षुषोऽपि विचारचक्षुषः शिवक्षोणीमहेन्द्राः ।

शिव— तानाजे, किं यवनानीमप्यभ्यस्तवानसि ?

तानाजिः— पूज्यपादानामनुग्रहादभ्यस्तैव यवनानी । तद्बलात्किमप्युपायान्तरमवष्टभ्ययवनसाम्राज्यमेतत्समूलकाषङ्कषितुमलम्भविष्यन्ति किमस्माकमधिनायकाः ?

Funding: Tattva Heritage Foundation,Kolkata. Digitization:



शिवः— तिष्ठतु निरर्थकोऽयमुपहासः। परिगृह्राण माहम्मदसैनिकवेषम्।

तानाजिः— एवमेवास्तु। मम साहाय्याय कल्याणस्वामिनमानेतुकामोऽस्मि।

एसाजिः— परिणतमधुना कल्याणस्वामिनो भागधेयं, यदाहूतस्स सूक्ष्मनिरीक्षणकलापारदृश्वा कपटसन्यासी तानाजिनामकेन विप्रलम्भकेनानेन।

तानाजिः— यथासमीहितमाचरामो वयम्। किमित्यसूयत्येष एसाजिरावाभ्याम्? (हसति)

शिवराजः— (समन्दस्मितम्) अभीष्टसिद्धये परमेश्वरीमभ्यर्थयन्तां भवन्तः। किमिति कर्तव्यमात्मीयं परित्यज्य वृथा परस्परं कलहायन्ते?

जय जननि भवानि लोकमान्ये।
यवनकुलविनाशिके वरेण्ये॥
श्रितजनपरिपालिके वदान्ये।
शुभजलजविलोचने नमस्ते॥१६॥

सुरेश्वरीं महेश्वरीं भजामि पापनाशिनीम्।
महार्घभूषणान्वितामनंन्तसौख्यदायिनीम्॥१७॥

सर्वे— शिवनरपतिं राष्ट्रोद्धारप्रवीणमुपाश्रित-।
द्विजगण (द्वितीयाबहुव्रीहिः) ममुं देवाराध्ये भवानि दयानिधे॥
महितजनतामान्यं रक्ष प्रधावितशात्रवं।
कमलनयने भक्ताभीष्टप्रदायिनि देवि नः॥१८॥

[इति निःष्क्रान्ताः]

॥ श्री ॥

# श्री भारत सुप्रभातम्

निबन्धा पण्डितराजः महामहोपाध्यायः कृष्णमूर्तिशास्त्री, मधुरा.

मोदकामोदमात्रेण मोदमानो गजाननः ।
तद्रसास्वादनसुखं मह्यं दद्यादुदारधीः ॥
मर्दयस्युपविश्यारवुं निर्दयस्त्वं गुरुर्गजः ।
प्रष्टा तव नकोऽप्यस्ति यस्मादसि विनायकः ॥
अमन्दानन्दसन्दायिरस निष्यन्दसुन्दरम् ।
उद्यानेऽस्मिं स्तृतीये तु काव्यरत्नं निबध्यते ॥

स्वस्त्यस्तु ते लक्ष्मणसिंह* ! धर्म-
रक्षामणे ! पण्डितराज एषः ।
समर्पये भारतसुप्रभात–
चम्पूप्रबन्धं तव तृप्तयेऽहम् ॥

( * Maharaja of Dungerpore State Sauth Rajputana )

श्रेयस्सहस्रवदनैरवदद्दयार्द्रः
संफुल्लकल्पसुमकल्पपदाभिनन्द्यम् ।
यो भाष्यमर्थगहनं महदादिशेषो
योगेश्वरस्स भगवान्दिशतादजस्रम् ॥

उद्याने कुसुमोच्चयेन सुभगे द्रष्टुं प्रभातश्रियं
भार्गव्यासह, मां विहाय शयनं संप्रस्थितो माधवः ।
सोऽहं श्रोतुमनास्तयोर्व्यवहृतिं हृद्यां रसस्यन्दिनीं
कुञ्जेलीनइवासमाशुकुतुकात्क्षुद्रोरगाकारतः ॥

Funding: Tattva Heritage Foundation,Kolkata. Digitization: e



भक्ताग्रगण्य शृणु शाब्दिककृष्णमूर्ते
श्रुत्यन्तमृग्यचरणाम्बुरुहोऽम्बुजाक्षः ।
स्कन्धोल्लसज्जलधिजाभुजनालदण्डः
खेलन्सलीलमहरद्धृदयं मदीयम् ॥

हन्त ? तदानीम्,

संरक्ष्य नक्तमधिकैरवगर्भमिन्दुः
संवेशितां श्रियमनिद्रसहस्रपत्रे ।
प्रत्यर्पयन्सवितृमण्डलमध्यवर्ति-
पुंसे क्रमेण कृतकृत्यतया तिरोभूत् ॥

त्वत्कान्तिलेशमुपजीव्य निशिभ्रमद्भि-
श्चन्द्रादिभिर्दिगुपभुक्तचरी मघोनः ।
पूतात्मनः किमुचिता विहतिस्तयेति
प्रोद्यन्तमर्यमणमम्बुजिनी जहास ॥

गीतिं मुदा मधुकरीषु वितन्वतीषु
हंसीषु पक्षपुटताडनतोऽप्सुतालान् ।
तीरद्रुमेषु विकिरत्सुसुमान्यभीक्ष्णं
लक्ष्मीर्ननर्त सरसीरुहरङ्गधाम्नि ॥

इत्थमुदञ्चत्कौतुकं परिनृत्यन्त्यां प्रकृत्यां, कुवलयदलश्यामलेन माधवेन निरतिशयर्द्धिमपि सौन्दर्यमात्मीयं स्फोटयन्त्याञ्च भगवत्यां मङ्गलदेवतायां, किमु वर्णयाम्यपर्याप्तमेवाभूच्चक्षुर्द्वितयं मन्दभाग्यस्य मेऽयहन्त । नैवोपयुज्येते सहस्रे नेत्राणामिति कामं व्यषीदम् । वस्तुतो नैव पर्याप्नुतस्ते अपीति विनिर्णयन्नस्तोषि केवलमहं शेषस्सर्वशेषिणं भगवन्तं शार्ङ्गिणं पवित्रेण परमन्तःकरणेन ॥

भावे भावे स्वरूपस्फुरणमसदृशं दर्शयस्येव भूयः
पूर्णो नारायण ! त्वं निरुपमकृपयास्मभ्यमभ्यर्हणीयम् ।
पश्यन्तोऽपि प्रभोऽन्धा भृशमपि बधिराश्शश्वदाकर्णयन्तो
जानीमस्त्वां प्रकृत्यामुपचितविहृतिं नैव सौन्दर्यसारम् ॥

तदन्वनादिदम्पत्योरुदभूद्वयाहारः कोऽपि मनोहरः ।

प्रिये ! सिन्धुसमुद्भवे ! पश्य—

प्रकान्तचादवचनाः प्रणदद्द्विरेफैः
पुष्पोद्गमैश्च सुभगैः कृतमन्दहासाः ।
रक्तैर्मृशङ्किसलयैरनुरागपूर्णाः
चूतान्मनोज्ञलतिका हि परिष्वजन्ते ॥
दूरादुपेत्य स्वयमेववल्ली-
कान्तं समाश्लिष्यतरुश्चकास्ति ।

इत्यर्धोक्तावेव हरेः

उत्पद्य कुत्रापि परिभ्रमन्ती
रत्नाकरं शैवलिनी वृणीते ॥
इति पूरयामासार्धमनायासेन भार्गवी ॥

इन्दिरे ! सिन्धुरगतिबन्धुरे ! अञ्चितमवोचस्त्वमर्धेन ।

रत्नाकरदुहितुर्ह्येष नित्यानुभूतिविषयः । यमवृणतस्वयं प्रसन्नविण्यस्तस्मा दुत्पन्नापुनस्त्वं मामवृणीथा इति वदामि ॥

प्राणनाथ ! कृष्णावतारे कौतस्कुतव्रजपुरन्ध्रिव्रजस्वयंग्रहाश्लेष एव स्मृतिविषयो भवन्तमवाचयत्पूर्वमर्धम् । ब्रवीतुभवान्सावधानं, किमहमवृणेऽथवा जाग्रत्स्वेव सर्वेष्वस्वप्नेषु, चक्षुःषु तेषां प्रक्षिप्येव मृदमार्द्रां तूर्णमपाहरन्मां निमिषमात्रेणेति ॥

प्रिये ! जाने योषितस्स्वभावतो रोषवत्य इति । यथातथा वा भवतु । न किञ्चिदत्याहितं ते मत्कृत्येन । प्रसीद सुषमाविशेषमौषसं समनुभवावः । विवादस्त्वावयोर्नित्यसिद्धो भविष्यति ।

पुरुषोत्तम ! काममवबुध्ये स्वापराधबोधविधुरास्सर्वे पुमांस इति । अकिञ्चित्करो मे प्रसादो, यस्सर्वेश्वरेण प्रार्थ्यते भवता । नित्यविवादस्य प्रायो निदानं भवानेवेत्यत्र, वृत्तमेतदेव निदर्शनं भवति । सर्वमेतद्गतं भवतु ।

इतःपरमीशीय दर्शयितुं प्रथमापराधकर्तारम् । समुत्कण्ठते चेतो मे निष्कुट-रामणीयकनिरीक्षणे । इतस्ततश्चरन्तावनुभवाव ।

लक्ष्मि ! निरीक्ष्यतामियमुपवनलक्ष्मीः—

मञ्जूद्गुञ्जदलिव्रजं जलधिजे ! कुञ्जं द्विजै (पक्षिभिः) रञ्जितं
फुल्लाम्भोजमिलन्मरालमहिलालास्यैर्मनोज्ञं सरः ।
क्रीडद्भिर्मृगशावकैर्निबिडिता मूलस्थली शाखिना-
मारामो हि विराजते मरकतश्यामैस्तृणैर्मेदुरः ॥

कुसुमसुभगास्स्तोकं नम्राः फलैश्च पचेलिमैः
रसिकमधुपास्वाद्या रक्ता भृशं नवपल्लवैः ।
ललितललितैरङ्गैस्श्यामा मनोहरविभ्रमाः
स्पृशति युवतिप्रेक्ष्यास्स्वैरं लता मलयानिलः ॥

मधुरिपो ! सन्तुष्यतीव भवान् रमणीयार्थप्रतिपादकं काव्यमेतत्पद्यं भवितुमर्हतीति । परन्त्वयं दिवास्वाप एवाकालेऽसावध्यारोहच्छिखरिशिखरम् । श्रवणमात्रेणास्य नियतमुद्विग्नं स्यादन्तःकरणं वनिताजनानाम् । यत एवमादिभिः पारतन्त्र्यमेव स्त्रीणामुपभोग्यत्वरूपं स्फोटितं भवति ॥

कमले ! खिलीकरोषि मे मस्तिष्कम् । न प्रतिभाति त्वदुक्तेरर्थः ॥

कञ्जलोचन ! न जानीषे कलिकिल्बिषकलुषितशेमुषीकाणां मनुष्याणामश्रुतचरं चेतोवैचित्र्यम् । अभिप्रयन्त्यवत्वे मर्त्याः प्राप्ताः प्रगतिम् ।

"मानुष्यकेऽस्मिन्साधारणे, स्त्रीपुंसयोर्न्याय्यं समं प्राधान्यम् । कालमनादिमारभ्यैतावन्तं पारतन्त्र्यापरपर्यायया नियन्त्रयामासुरभेद्ययाऽयःशृङ्खलया वनिताजातिं तपस्विनीम् । सर्वथा तदुच्छेदनं भवति महल्लक्ष्यमस्माकं प्रेक्षावताम् । स्त्रीणां तिर्यगविशिष्टतां दृष्टवन्तः स्वार्थमात्रप्रवृत्ताः प्राक्तना ध्रुवमर्हन्ति महाप्रायश्चित्तम् । कालवशङ्गतास्ते कं वा लाभमवाप्नुवन्नन्तरेणेमामपख्यातिम् । परिपश्यत पाश्चात्यानामञ्चिततरमाचारम् । आत्माभ्यधिका एव संमन्यन्ते स्वास्स्वा विलासिनीः । तज्जातीया हि युवत्यस्स्वैरं परिभ्राम्यन्ति भुवस्तलमखिलमुच्छृङ्खलाः । अनभिमतान्परित्यजन्ति निजभर्तॄन् । रञ्जयन्ति च स्वाभिलाषुकान्कामुकान् । अंबरसममंबरं वसाना नवनागरिकवेषभाषाविशेषपरिष्कृताः पुरुषायमाणाश्चरन्ति सर्वत्र स्वेच्छया। नास्माकं गृहलक्ष्म्य इव महानसे निर्वध्य निबन्धिताः । कूपभेकीकल्पा इमाः कथङ्कारं कल्पेरन्लोकोपकाराय । सतीत्थमल्पे सनातनधर्मावलंबिनो लोकोद्धारकंमन्या भियेवास्मभ्यं दद्याम परमितः स्वातन्त्र्यं स्त्रीभ्य इति प्रलपन्ति । दातुमादातुं वा वराकाणाममीषां को वाधिकारः । चित्तवृत्तिरीदृश्येवैषां दण्ड्यत्वे भवति हेतुः । स्मृत्यादिषु दातव्यतया समस्ति स्वातन्त्र्यमिति परं साङ्गिरन्ते । मनागपि नानुतिष्ठन्ति । का नाम स्मृतिस्तिन्त्रिणीकल्पा ?। विपरीतं "पिता रक्षति कौमार" इत्याद्यन्धपरंपरापरिप्राप्तमेवासकृदाम्रेडयन्ति तुन्दपरिमार्जाः । नियतमेते दारुणा दण्डनीयाः । ऋतुमतीविधवासगोत्राणामादरणीयस्सर्वात्मना परिणयः । अवश्यकार्योऽप्यनुष्ठानसाध्यतया । दायप्रविभागोऽपि पुरुषाणामिव योषाणामप्युपकल्पनीयः । एवं हि क्रियमाणं स्त्रीसमुद्धरणं कल्पेत महते स्वाराज्याय । तत्प्रयतेमहि प्राणपरित्यागमप्यगणयन्तः पवित्रतरकृत्यमेतन्निर्वर्तयितुम् । चण्डालादीनामेवमेव यावत्कल्यामस्समुद्धरणं लोकक्षेमङ्करमिति"

रमे ! न मेऽयं परमतानुवाद इव भाति ॥
आविष्करोष्यभिप्रायं स्त्रीयं पुत्रि ! सरस्वतः
विनोदयितुमात्मानं परत्रागोऽधिरोपणात् ॥
प्रभो ! न कस्यचन सामर्थ्यं सन्त्यज्य च चतुर्भुजम् ।
निरणैषीद्भवानित्थं कथं नाथ वदाद्य मे ॥
भद्रे ! द्राघीयानयमुपन्यास एव द्रढयति मे भावम् ।
दामोदर ! अपि नामायं नियमः ? मितभाषितेन परं सत्येन भवितव्यमतथाभूतेन न तथेति ।

प्रिये ! कृतमप्रकृतयानया मर्त्यलोककथया । तुभ्यं कथमपाराध्यमनेन श्लोकेन !

प्राणेश ! नायं श्लोको वैकुण्ठलोकोपकण्ठकोमलोपवनसीमन्येव प्राप्स्यति विश्रान्तिम् । अचिराय भारतभूम्यामरीति न सन्देहः । आवयोर्विषये कीदृशोऽभिप्रायस्स्यादाधुनिकरसिकानां विमर्शकानाञ्चेति विभाव्यतां भवता ।

पद्मे ! परमाणुप्रायमेतत्पद्यं सुमेरूकृत्य किमपि किमप्युपन्यस्यसि । किन्न श्रूयन्ते स्त्र्यङ्गप्रत्यङ्गोपाङ्गवर्णनप्रवणानां कोटिशो निवन्धाः कवीनाम् ।

प्राचेतसप्रभृतयो मुनयोऽपि, कालि–
दासादयो भुवि महाकवयः प्रसिद्धाः ।
शृङ्गारमेव रसराजमभिप्रयन्तः
स्त्रीवर्णने धियमकार्षुरयंनु दोषः ॥

विष्वक्सेन ! विदुषामद्यतनानां दोष एवैष इति विनिर्णयः ।
मन्येऽहमन्तकाल एवायमीदृशानां ग्रन्थानामिति ॥

भार्गवि ! नास्माकमेव काव्येषु परमेवम्, इतोऽपि भूयस्तरां पाश्चात्यसाहित्येषूपवर्ण्यन्ते वरवार्णिन्य इति शृणुमः । एवं तर्ह्यस्मदीयानामेव कथमनुपादेयता ! ।

स्वामिन्सत्यमेतत् । पारत्रिकाभ्युदयसमुदयपराङ्मुखेषु तेषां काव्येषु संरक्ष्यतेतरां स्वैरिणीभावस्य महान्परिपोषः । भारतीयग्रन्थेषु तु, पातिव्रत्याद्यनेकानावश्यकनियमानां परित्राणं दोष इवेति भाति ॥

अयि मुग्धे ! मैवं वोचः

भारते प्राप्तजन्मानस्त्रियस्सर्वाः पतिव्रताः ।
इतरास्त्वतथाभूता इत्यनर्हत्तमं मतम् ॥

सर्वस्त्रीसाधारणदोषानाह मनुः । नैव क्षोदक्षमो भवति पञ्चकन्यादिषु विषये विमर्श इति केचिदाशेरते । अविरुद्धमपेक्षितं स्वातन्त्र्यं नित्यसिद्धमेवेति निश्चीयते विपश्चिद्भिर्धर्मग्रन्थेभ्यः । एवं सति स्त्रीस्वातन्त्र्यं स्त्रीस्वातन्त्र्यमित्यसकृदावर्तयन्तः कतिपयेऽद्यतना नैव जानते तत्स्वरूपं किङ्कियदिति । व्यामोहात्स्वयन्नष्ट इति न्यायेन, स्वयमपन्थानमेव नेतुं वनिताजनं काममुत्सहन्त इति तत्वम् ॥

वस्तुतो दुर्ज्ञानमेव भवति भामिनीनां स्वाभाव्यम् । सर्वान्तर्यामिणोऽपि मादृशस्य योषाविषयो विमर्शस्सर्वथा न जयकरो भद्रङ्करश्चेति वदामि । आपातरमणीयो हि संसारः । अतस्समूलमुन्मूलनीयो भवति जीवानामिवेश्वरादीनामपीति हृदयम् ॥ आस्तामिदं, प्रेयसि ? तर्हि कीदृशमिमे नव्यपरामर्शरासिका रोचयेरन्निबन्धम् ! ॥

अच्युत ! रोचेत कीदृगेभ्य इति न जानेऽहम् । इदं केवलं वदामि । प्राक्तनफक्किकावैमुख्यमेव मुख्यं भवतीति ।

प्रिये ! नमः कविभ्यः पूर्वेभ्यो येऽनुक्त्वैव दिवंगताः ।
अधुना यदि जीवेयुर्हन्येरन्नरसिकैर्नवैः ॥
पुंसां कलौ ह्रासमुपैति लक्ष्मि !
ज्ञानक्रियाशक्तिरिति प्रतीमः ।
यद्धर्मवैमुख्यत एव हेतोः
पादद्वयोपेतमृगाश्चरन्ति ॥

प्राणकान्त ! नैतदञ्चितं वचो भवतः । सन्ति ह्यद्यत्वे रसिकाग्रेसरा विमर्शकवराश्च । अविचार्यैव भवानदूषयदेवमिति ब्रूये कामम् । लोकस्यायं स्वभावः, अपेक्ष्य प्राक्तनमभिरुचिबाहुल्यं नूत्न इति निर्जीवत्वादेव प्रायस्सर्वे क्रमेण प्राचीना ग्रन्थानामावशेषा भवन्ति । नात्राक्रोशः कार्यः । सर्वमपि विमृश्य अयमेव समुचितः पन्थाः । स्मरतु भवान्कालिदासस्य सूक्तिं “ पुराण-मित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् । सन्तः परीक्ष्यान्यतर-द्भजन्ते मूढः परप्रत्ययनेयबुद्धि ” रिति ॥

तत्तद्देशकालाननुगुणानामेव विषयाणां वर्णने कः पुरुषार्थः ! । अत-स्तत्तद्देशकालानुसारेण सामुदायिकधर्मावबोधकैरेव भवितव्यं भव्यैर्ग्रन्थैरिति बाढं ब्रवीमि । एतादृशैरेव महान्कृतस्स्याल्लोकोपकार इति विभाव्यताम् ॥ किमपराद्धं रसिकैर्विमर्शकैर्वा नव्यैरिति पृच्छामि । हन्त ! भवादृशानामप्ययं दोषः, यदपरीक्ष्य निर्णयनम् ॥

मङ्गलदेवते ! अलमनेनामङ्गलालापेन

च्छायाद्रुमैः कवचिते प्रमदावनेऽस्मि–
न्निश्शेषमेव विनिहन्तुमिनप्रकाशः ।
शक्नोति हन्त ! नहि सन्ततसाधिकारं
मूर्खस्य चेतसि विमोहमिवोपदेशः ॥

काममन्वभूव प्रभातसौभाग्यं, निर्वर्त्य कृत्यं माध्याह्निकं सेविष्यावहे सायं पवनमुपवनेऽस्मिन्निति यावदुदसहत प्रस्थातुं मधुसूदनस्सदनं, तावदेव,

स्फुरन्मरकतोर्मि-काङ्गुलिनखार्धचन्द्रप्रभा—
मिलत्तरलतन्त्रिकोद्दलितगीतिरीत्यञ्चिताम् ।
मनोज्ञमणिवल्लकीं स्वमधुरस्वरैर्ह्रेपय–
न्नुपागमदुपेन्द्रसुत्सवभरो दशोर्नारदः ॥

॥ * ऊर्मिका + अङ्गुलीयकम् ॥ (क्रमशः)

## आवश्यकी सूचना

मधुरवाण्यां प्रौढा एव विषयाः प्रौढयैव भाषया प्रतिपाद्यन्ते। ते केवलं विद्वद्भिः परिनिष्ठितपाण्डित्यैरेव गम्या वाच्याः। न ते लेखा व्युत्पत्सूनां साधारणव्युत्पन्नानां च विद्यार्थिनां न कथमप्युपकुर्वन्ति। कथमेतेऽनधिगतप्रयोजना बालाः सत्यपि सुरवाणीविषये महति प्रणये मधुरवाणीं पुरस्कुर्वीरन्, कथं वाऽद्रियेरन्। कथं वा वाचयितुं मनो दधीरन्। वृत्तपत्रं नाम पण्डितपामरसाधारणम्। तत्र विदुषामुपयुक्ताः लेखाः प्रौढया सालङ्कारया भाषया प्रथनीयाः। सरलया भाषासरण्या निबद्धा लेखा विद्यार्थिनामुपकारका भवेयुः तादृशा अपि लेखाः प्रत्यङ्कं प्रकाशनीयाः, येन सर्वेऽपि संस्कृतप्रणयिनो विद्यार्थिनः अहमहमिकया मधुरवाणीवाचने बद्धादरा भवेयुः। अतः संपादकैरत्रावधेयमवश्यम्। विद्यार्थिनोऽपि लेखनपाटवाधिगमाय स्वयं लेखान् विलिख्य मधुरवाण्यां प्रकाशनाय प्रेषयेयुः। संपादकास्तान् परिशोध्य प्रकटयेयुः। येन विद्यार्थिनामुत्साहो वर्धेत, लेखनकौशलं क्रमेणासादयेयुस्ते। मधुरवाण्यां सौहार्दं चाभिवर्धेत। सर्वत्र प्रचारः स्यात्। मधुरवाण्याः प्रधानोद्देशः सर्वत्र संस्कृतभाषाप्रसाररूपः सफलः स्यात्। ग्राहकाभिवृध्द्यां मधुरवाण्या आर्थिकी परिस्थितिरनुकूला भवेत्। ततो निर्विघ्नं नियतवेलं प्रकाशने समर्था भूयात्। अतः संपादकैस्तदेतत्सकलं समालोच्य उभयोपकारकं कार्यमवश्यमनुष्ठेयं सत्वरमिति साग्रहप्रार्थनेति—

भवदीयः

विश्वनाथभट्टाचार्यः।

---

संपादकैः प्रथमं सङ्कल्पितमेव प्रेम्णा सूचयत्ययं महाभागो मधुरवाण्याः समुन्नतिप्रेम्णा। सूचनेयमवश्यमागामिनोऽङ्कात्कार्यरूपेण दृश्येत। एतल्लाभो विद्यार्थिभिरवश्यमागृह्यतां सोत्साहमहं पूर्वमहं पूर्वमिति। छात्रैः लघवो

लेखाः सुस्पष्टाक्षरैर्विलिख्य प्रेष्यन्ताम् । मधुरवाणी सानन्दं साभिनन्दनं प्रकाशयेत् तल्लिखान् । मधुरवाणी विद्यार्थिभ्योऽर्धमूल्येनात्मानं दातुमुत्सहते । एष लाभोऽपि स्वीक्रियतां भावुकैः सहस्राधिकैः छात्रैः । येन मधुरवाणी सोत्साहभरं देवभाषासेवां विधातुं प्रभवेताविच्छिन्नम् ।

संपादकः

## स्त्रीभिरपि संस्कृताध्ययनं कर्तव्यम्

( लेखिका— कुमारी शिलादेवी बागलकोट )

ज्ञानसंपादनाय मनुष्यजातिर्निर्मिता देवेन । देवस्येच्छानुसारं प्रवृत्तस्य मानवस्य परमं श्रेयो भवेदेवेत्यत्र नास्ति संशयलेशोऽपि । ज्ञानं नाम अन्नमिव पुरुषाणामिव योषाणामपि आवश्यकम् । अन्नेन विना यथा शरीरं कृशं भवति, तथा ज्ञानात् ऋते मनः संकुचितं भवति । उत्कृष्टा विचारा नोद्भवन्ति । विलक्षण आनन्दो नानुभूयते । अतो ज्ञानं नरैरिव नारीभिरपि संपादनीयम् । तासामपि मनो विद्यते । आनन्दोऽपि ताभिरपेक्ष्यते एव । स च ज्ञानाधीनः । ज्ञानाभावे पशुरिति कथ्यते कविभिः "ज्ञानेन हीनः पशुभिः समानः" इति । स्त्रीभिः सर्वथा पशुभिर्न भाव्यम्, पशुसाम्यं च नापेक्षणीयम् । अतो ज्ञानार्थं बहुलः प्रयत्नः कर्तव्यः । तच्च ज्ञानं संस्कृतवाङ्मये विपुलं विद्यते । तत्र अपूर्वा ग्रन्था विलसन्ति । इतरभाषासु अप्राप्या मनोनैर्मल्यमावहन्तो नवं प्रमोदं जनयन्तो बहवो विषया विराजन्ति । अत इतरविद्या अधीयमानाभिरपि विद्यार्थिनीभिः सर्वविद्याभाण्डागारायमाणं संस्कृतमवश्यमध्येयम । संस्कृत-वाङ्मये परमसूक्ष्मतमान् जगतः सृष्टिक्रमः, ईश्वरस्याद्भुतव्यापाराः, परमात्म—जीवसंबन्धः इत्यादीन् सूक्ष्मतमान् विषयान् उपदिशन्तो वेदराशयः सन्ति । ते वेदा ईश्वरमुखात् स्वयमेव प्रादुर्भूता इति

ज्ञानिनः कथयन्ति । तथा संस्कृते आदिकविना वाल्मीकिमुनिना विरचितम् जगत आदर्शपुरुष–स्त्रीचरित्रबोधकं रमणीयं सरसं श्रीरामायणं नाम सर्वोत्कृष्टं महाकाव्यं विद्यते। तथा श्रीवेदव्यासमहर्षिणा प्रणीतं जगतो मार्गदर्शकैः विविध विषयैः पूरितो महत्तमो महाभारतं नाम सर्वैरादरणीयो ग्रन्थः पठितॄणां मनः तत्कालं कर्षति बलादेव । तथा कालिदास–भवभूति–भारवि–भट्टि–भल्लट–भट्टबाण–श्रीहर्ष–जगन्नाथप्रभृतिभिः, पुरुषकविभिः विजया–शीलाभट्टारिका–विज्जिका–वैजयन्ती–मधुरवाणी–गङ्गादेवी–तिरुमलाम्बाप्रमुखस्त्रीकवयित्रीभिरपि निर्मितानि मनोहराणि आनन्दसन्दायकानि बहूनि काव्यानि आकाशे नक्षत्राणीव संस्कृतवाङ्मये प्रकाशन्ते। तेषां किञ्चित्परिचयं विद्यार्थिनीभ्यः मधुरवाणीद्वारा क्रमेण दातुं मम मनीषा विद्यते। मधुरवाणीसंपादका मम बालिकाया लेखायावकाशं दद्युरिति मम दृढो विश्वासो वर्तते । विद्यार्थिन्योऽपि संस्कृतप्रेम्णा वा स्वजातिपक्षपातेन वा मदीयान् लेखान् सादरं वाचयेयुः, अहमिव स्वयमपि लेखं लिखेयुरिति मम महानभिलाषः । ममाभिलाषः पूरणीय इति ताः साग्रहं प्रार्थयामि । तासां लेखानां मधुरवाण्यामवकाशः प्रदेय इति संपादकानपि सविनयं विज्ञाप्याधुना विरमामि ।

---

कुमार्याः शिलादेव्याः सरलं सारगर्भं च लेखमनुवाच्य प्रमोदामहेतमाम् । विद्यार्थिनीनां विदुषीणां च लेखानां प्रकाशने मधुरवाणी सदैव बद्धादरेति बाढमाश्वासयामः सानन्दम् । स्त्रीलेखानां कृते मधुरवाण्यां प्रत्यङ्कं प्रत्येक विभाग एवास्माभिः कल्प्यते । अतो विद्यार्थिनीभिर्विदुषीभिश्च लेखाः प्रेषणीया अवश्यम् । विशेषतो विद्यार्थिनीभिः लेखलेखने प्रयत्नः कर्तव्य इति सूचयामः ।

संपादकः

# सानन्दमभिनन्दनम्

संस्कृतमातृमन्दिरायमाणे भारते इदानीं कालमहिम्ना विरलाः संजाताः संस्कृतप्रणयिनः। संस्कृतप्रणयित्वेऽपि संस्कृतप्रसाराय साहाय्यकारिणो विरलतरा एव। विरलतमाश्च तादृशा अन्यव्यवसायिनः। पुण्यपुरं नाम पुण्यपुरमेव। तत्र गीर्वाणवाग्वर्धिनीसभाया आध्यक्ष्ये नियुक्तानां मधुरवाणी-संपादकानां तादृश इतरत्र दुर्लभोऽनुभवः संजातः। डॉ. गोकर्णमहाशयान् पुरस्कृत्य परमोदाराणां डॉ. जी. वी. देसाईमहाभागानां दर्शनार्थं गतेषु मधुरवाणीसंपादकेषु प्रतिमासं सहस्राधिकरूप्यकसंपादकैर्लक्ष्मीकृपाकटाक्षपूर्ण-पात्रैः श्री देसाईमहाभागैः यत्सारल्यं दर्शितं, यद्विनयः प्रकटितः यत्संस्कृत-प्रणयातिरेक आविर्भावितः यच्च सहजमौदार्यमाविष्कृतं तत्सर्वमवलोक्य विस्मयस्तिमिता एवाभूवन् म. वा. संपादकाः। तदैव तेषां मनसि कुतोऽपि विश्वासः समजायत यदमीषामुदाराणामौदार्येण मधुरवाणी स्वतन्त्रमुद्रणालय-सिंहासनमधिरुह्य संस्कृतप्रसारसाम्राज्यं शासितुं प्रभवेत्। सोऽयं विश्वासः स्थाने एव भवेदिति नितरामाशास्ते प्रसन्नं मनः। तत्क्षणं पञ्चाशद्रूप्याणि प्रदाय तदा तदा पुनः साहाय्यप्रदानाभिवचनेन महौदार्यं प्रकटीकृत्य इतरेषां धनिकानां मार्गं प्रदर्शितवतः श्रीदेसाईमहाभागान्समभिनन्दामस्तमां सहस्रशो धन्यवादपुरस्सरं सप्रमोदभरं कृतज्ञतोत्सिक्तमनसा समाशंसितशुभोदयम्।

तथा व्यवसायबन्धवो महाराष्ट्रे प्रथितानुकरणीयवृत्तपत्रव्यवसायाः कर्तृत्वशालिनः संस्कृतप्रणयिनः उदारप्रकृतयः विपदन्धकारनिमग्नस्य भारतस्य प्रभातोदयेऽहर्निशं प्रयतमानाः सकाले विविधसमुचितहितकरोपदेशप्रवणा आपत्तनमाघोषं प्रतिगृहं सादरमनुवाच्यमानस्यापूर्वविषयोपबृंहितस्य स्त्री-बाल-तरुण-वृद्धप्रियस्य "सकाळ" दैनिकपत्रस्य समर्थाः संपादकाः संचालकाश्च **श्री. ना. भी. परुळेकर** महाभागाः संस्कृतप्रेम्णा व्यवसायबन्धुत्वबुध्या पञ्चाशद्रूप्याणि वितीर्य यदनुकरणीयमौदार्यं प्राचीकशन् तत्कृते कृतज्ञता-

वनतशिरसा धन्यवादकुसुममालां समर्प्य सानन्दमभिनन्दामस्तमां व्यवसायबन्धून् श्रीपरुळेकरमहाभागान् शुभाशंसापुरस्सरम्।

तदेतच्छ्रेयोनिदानभूतान् मधुरवाण्यां वहोः कालादव्याजप्रणयान् तदुत्कर्षाय बद्धपरिकरान् सुहृत्तमान् डॉ. गोकर्णमहाभागान् स्तोतुं शब्दानामपर्याप्ततया केवलं कृतज्ञतासहजाधमर्णतां धारयामो वयमुपकारभारनम्राशिरसा। आशास्महे चाचिरतां शुभपरम्पराम्।

---

संपादकालोकः

## सर्वकार–रा. स्व. संघाभिनन्दनम्

सर्वानन्दकरोऽपि धाराधरो जगद्धितकरं दिवाकरं करैः सागरजलाकर्षणेन स्वप्रभवमपि तदुपकारं विस्मृत्य प्रखरतापकर इति सदैवाच्छाद्य दुर्दिनं यदि विदध्यात्, तर्हि कस्य वा चेतसि नोत्पादयेत्खेदम्। तथा प्रभाकरोऽपि जलधरबलं विकलमाकलयितुं प्रयतेत तदपि विषादास्पदमेव। अविरोधिनावेव भास्कर–वारिदौ जगतो हिताय कल्पेते।

महात्मनो वधानन्तरं संभ्रान्तचेतसः सर्वत्र संशयस्य सहजतया विचारशक्तेर्ह्रासेन च सर्वकारेण वृथा वर्षाधिकं समयं कार्यक्षमो हिन्दुजातिसमुद्धारैकलक्ष्यो रा. स्व. संघः प्रतिबद्धो दोषाभासारोपेण। रा. स्व. संघेनाऽपि निजघटनाया अविधानेन निर्दुष्टस्यात्मन उद्देशस्य गुप्ततारक्षणेन प्रथममेव महात्मवधविभ्रान्ते सर्वत्र संशयग्रस्ते च सर्वकारस्य चेतसि सैनिकशिक्षणसंघटनादिसुव्यवस्थितसंघविषये कालुष्यमुदभूद्विपन्नपरिस्थित्याम्। परमिदानीं संघे वृथाऽऽरोपितदोषाणां केनापि प्रमाणेनासिध्या संघेन स्वीयघटनाविधानेन उद्देशस्य प्रकटनेन च निर्बन्धान्मोचितः सर्वकारेण सर्वसंशयापरिहारेऽपीति

प्रमोदास्पदमेतत् । सर्वकारसूचनया सत्याग्रहान्दोलनं प्रतिवध्य घटना—उद्देशप्रकाशनेन संदर्शितानुकूल्यं संघं, बहुकालादपि स्वीयबन्धुत्वबुध्या विमोचितसंघनिर्बन्धं सर्वकारमभिनन्दामस्तमाम् ।

इतःपरं सर्वकारेण दूरीकृत्य सर्वसंशयान्, अनाश्रुत्य परोपजापं राष्ट्रोत्कर्षावहं विक्रम–धैर्य–संघटनादिनैकगुणसंघं रा. स्व. संघं प्रेम्णा स्वीयत्वबुध्या अधिकारप्रदर्शनमनीषात्यागेन च केवलं भारतहितैकदृष्ट्या आत्मसात्कृत्य साधनीयं भारतीयकल्याणम्, संघेनापि सर्वकारेण प्राक्कृतं सर्वं विस्मृत्य तदानुकूल्येनैव विपन्नहिन्दुजातिसमुद्धारो विधेयः इति च सूचयामः ।

संघानुकूल्ये प्रभुता स्थिरा स्यात्
स्थिरं प्रभुत्वं जगतो हिताय ॥

---

# हन्त ! संस्कृतकवेः सर्वकारसन्मानः

दक्षिणभारते मद्रप्रान्तं नाम परमभद्रावहं संस्कृतविद्यायाः । स देशो नैकशास्त्रनिष्णातानां सरसकवितारचनाऽन्दोलितरसिकजनशीर्षाणां कवितल्लजानां च यथाऽऽकरस्तथा तादृशपण्डित–कवि–गुणग्राहिणां सामन्तभूभृतामपि निकेतनम् । तेषामुदाराणां संस्कृतविद्याप्रभाववेदिनां नृपाणामौदार्येण शताधिकविद्यालय–महाविद्यालया अद्यापि प्रचलिताः भारत गौरवं वर्धयन्ति । यत्र सहस्राधिका विद्यार्थिनो विविधशास्त्रेषु अध्याप्यन्ते कालक्षेप ( स्कॉलरशिप ) प्रदानपूर्वकम् । पोष्यन्ते च शताधिका विपश्चितो वृत्तिदानेन । सम्मान्यन्ते च सभासु विपुलदक्षिणादानेन सोर्णवस्त्रम् । न केवलमेतैः संस्थानिकैरेवं संस्कृतविद्या संपोष्यते, किन्तु तत्रत्यसर्वकारेणापीति महद्भाग्यमेतत्संस्कृतविद्यायाः । पूर्वं विदेशीय 'ब्रिटीश' राज्येऽपि

तत्रत्यजनानामाग्रहेण संस्कृतविद्याया उत्तेजनार्थं राजकीया "शिरोमणि" परीक्षाव्यवस्था विहिताऽद्यापि स्वकार्यक्षमा विद्योतते। यत्र प्रतिवत्सरं साहित्य–तर्क–वेदान्तमीमांसादिसर्वशास्त्रेषु परीक्षोत्तीर्णा विद्यार्थिनः 'शिरोमणि' पदवीदानेन पुरस्क्रियन्ते। समुत्पाद्यते च समुत्साहः संस्कृत-विद्याध्ययने। एवं मद्रप्रान्तेऽधुनापि संस्कृतविद्यादेवी नरीनर्ति सर्वत्र। इदानीं संस्कृतविद्यामहत्त्ववेदिना कल्याणाभिनिवेशिना स्वकीयेन मद्रप्रान्तसर्वकारेण



**पं. राजकविः श्री कृष्णमूर्तिशास्त्रिमहाभागः**

पूर्वतः पुरः पदं निधाय इतरभाषा (कर्णाटक–आन्ध्रादि) कवय इव संस्कृत-कवयोऽपि "राजकविः" इति विरुददानपूर्वकं सौर्णवस्त्रं प्रतिवत्सरं रूप्यक-सहस्रप्रदानेन पुरस्करणीया इत्यभिनवां संस्कृतभाषासमुत्तेजनक्षमामितरप्रा-न्तीयसर्वकारानुकरणीयां श्लाघनीयामभिनन्दनीयां च पद्धतिमुद्भाव्य अस्मत्प्रिय-सुहृदो नैकशास्त्रपारावारपारदृश्वानो, वीणारणनहीनादरकया गिरां देव्या सानन्दमतृप्ति मुहुर्मुहुः समाचामितरसानां सहृदयहृदयावर्जनचणानां सरस गद्य–पद्यकाव्यानां रचयितारो, बहोः कालात् मधुरवाणीद्वारा सरसलेखैरनु-

रञ्जितरसिकोत्तंसा मधुरवाणीप्राणायमानाः अस्मिन्नेवाङ्के प्रकाशित 'भारतसुप्रभात' नामकलेखप्रसवाः महामहोपाध्यायादि नैकपदवीरेव भूषणन्तः श्री. के. एस्. कृष्णमूर्तिशास्त्रिणः "राजकविः" इति सम्मानिताः इति वृत्तपत्रेऽवनुवाच्येमां शुभप्रवृत्तिं नितान्तमानन्दपरवशा एवाभूम वयम्। एतदर्थं सश्लाघं सहार्दमभिन्दामस्तमां मद्रप्रान्तीयसर्वकारम्, अस्मत्प्रियवयस्यान् श्रीकृष्णमूर्तिशास्त्रिणोऽपि प्रमोदाश्रुभरेणाभिषिञ्चामः सादरमुत्तरोत्तरशुभाशंसापारिवर्हपुरस्सरम।

समयेऽस्मिन् मोहमयीप्रान्तसर्वकारमपि विज्ञापयितुमिच्छामो वयम्-मार्गदर्शिनो मद्रप्रान्तीयसर्वकारस्य मार्गमनुसृत्य विरलसंस्कृतप्रचारे मोहमयीप्रान्ते संस्कृतपरीक्षाव्यवस्थाविधानेन संस्कृतविदुषां सबहुमानं पुरस्कारेण च विलयपथमुपगता तपस्विनी संस्कृतविद्या पुनरुज्जीवनीया संरक्षणीया पोषणीया समुत्तेजनीया प्रोत्साहनीया च। तेन च चिराल्लुप्तमयशः प्रमार्ज्य विमला कीर्तिरासादनीयेति। तदिदं सर्वथा श्रेयस्करं कार्यं कुर्वीत मोहमयीसर्वकार इति वयमाशास्महे बाढं विश्वसिमश्च। यत्, संस्कृतभाषायां प्रवीणाः, गरीयस्त्ववेदिनः, प्रणयिनः श्रीखेरमहाभागा मुख्यमन्त्रिपदमलङ्कुर्वन्ति। तैर्मनोयोगे दत्ते मोहमयीप्रान्ते संस्कृतोत्कर्षस्य न कोऽप्यन्तरायः, समुपस्थास्यति नाल्पोऽपि कालविलम्बो भवितेति जानीमो वयम्। त एवैतत्कार्यकरणे क्षमाः तन्मन्त्रिपदावसरे एवेदं सुकरं स्यादिति मन्यामहे। अतस्तेमहाभागाः सद्य एवैतस्मिन् कार्ये प्रवर्तन्तां संस्कृतोन्नतिश्रेयश्च लभन्तामिति सविनयं साग्रहं च प्रार्थयामो वयम्।

---

अतीताषाढपौर्णिमायां पुण्यपत्तने गीर्वाणवाग्वर्धिनीसभाया सप्तदशवार्षिकोत्सवो महता समारोहेण संवृत्तः, यत्र मधुरवाणीसंपादका अध्यक्षत्वेन नियुक्ता आसन्। तेषामध्यक्षीयभाषणं पुरस्तनेऽङ्के प्रकाश्येत। संस्कृतप्रणयिनामादर्शप्रायेयं सभा पण्डितप्रवराणां श्रीरानडे पुरुषोत्तमशास्त्रिणां, व्याकरणायुर्वेदविद्यादिपारङ्गतानां श्रीशेण्डेगणेशशास्त्रिणां, संस्कृतवाचस्पतीनां पुण्य-

पत्तनीयमहाविद्यालये प्राध्यापकानां एम्. ए., पी. एच. डी. इत्यादिपदवीरेव आत्मना धारणेन विभूषितवतां श्रीवाटवेमहाभागानां, तथा वैद्यविद्यानवद्यवैशारद्यप्रथितयशसां श्रीआपटेमहोदयानां च संस्कृतभाषाप्रणयातिरेकाखण्डपरिश्रमयोः शुभपरिपाकः । अतः सर्वथा ह्येते महाभागा नितान्तं धन्यवादार्हाः नितरां प्रशंसास्पदीभूताश्च सर्वेषां संस्कृतानुरागिणाम् । संस्कृतसेवायामविरतश्रमभाजाममीषां परं श्रेयः समाकाङ्क्षामो वयम् ।

---

अधुनैव "राजकवी" भूतानां
श्री. के. एस. कृष्णमूर्तिशास्त्रिणां श्लोकाः

श्रीः

## मद्रास् गवर्नर् दर्बार्

श्रीमत्यः श्रुतयस्सह स्मृतिमुखैश्शास्त्रैः प्रकाशङ्गता
यस्यां शङ्करसद्गुरुप्रभृतयो जाता मतस्थापकाः ।
राजाजी जवहर्पटेल्करमचन्द् गान्धिर्महात्मा समे
यस्याः प्रेमसुताश्च भारतभुवं वन्देय तां मातरम् ॥१॥
अस्माकं भाग्ययोगाद्भवनगरमहाराज एष प्रसिद्ध-
क्षोणीभृद्वंशदुग्धोदधिविधुरसमश्शेवधिस्सद्गुणानाम् ।
धर्मः क्षात्रो वपुष्मान्निजसुखविमुखः प्राक्कलाचारवृद्ध्यै
भूत्यर्थञ्च प्रजानां वहति समुचितं मद्रराज्याधिपत्यम् ॥२॥
गर्भस्थो वामदेवो मनुरहमभवं सूर्य इत्याचचक्षे
प्रल्हादाद्याः कुमारा अपि समुदलसन्भक्तिसाम्राज्यभाजः ।

पद्मिन्याद्याश्च साध्व्यस्समजनिषत ताः प्रातरुत्थाय वन्द्या
वीराग्रण्यश्शिवाजीप्रभृतिनृपतयोऽप्यर्भका भारतोर्व्याः ॥३॥

धर्मक्षेत्रतयात्र कीर्तितचरे सद्भिः शुभे भारते
सर्वाभिश्च समृद्धिभिर्विलसिते स्वर्गादपि ज्यायसि।
ज्ञानाचार्यसहस्रजन्मभवने गान्ध्यादिभिस्सं ते
हन्ताद्य श्वविषाद्भयङ्करतरं नास्तिक्यमालक्ष्यते ॥४॥

त्यक्त्वा जातिमतोपबृंहितभिदां दीयेत चेदादरा-
त्सर्वेभ्यस्सुरभारतीपरिचयो भूयान्विपश्चिद्वरैः।
एकैकोऽपि भवन्विवेकमिहिरो नास्तिक्यमुन्मूलये-
द्रक्षेद्भारतगौरवं महदिदं स्वातन्त्र्यसिद्धेः फलम् ॥५॥

भोजाद्याः पृथिवीभुजोऽपि सुधियः श्रीकालिदासादिमा-
न्स्वीयास्थानकवीन्विधाय विविधं सम्मानयाञ्चक्रिरे।
तामेतां शुभपङ्क्तिकां प्रथमतस्स्वातन्त्र्यलाभात्परं
मान्या मद्रपुरीयमन्त्रिण इमे पर्यग्रहीषुर्बुधाः ॥६॥

दृष्ट्वेमां राजधानीं शुभमतिमितरा राजधान्योऽपि सद्यः
तन्वन्त्वास्थानभाजः कविकुलतिलकान्मानदानाद्युपायैः।
एवञ्चेन्नृत्यरङ्गस्थलमतुलमिदं भारतं संविभाया-
द्वागीश्वर्याः प्रसादाद्वयममृतभुजस्स्याम मा संशयो भूत् ॥७॥

भाषाद्वेषं भारतीया द्विषन्तु ब्राह्मी यस्माद्विश्वभाषामयीयम्।
तत्वञ्चैतत्सूच्यते शासकैर्नः सत्कारेणाशेषभाषाकवीनाम् ॥८॥

सम्राजश्शतमग्वरप्रभृतयो माहंमदाः प्रेमतः
प्राणेभ्योऽप्यधिकानमन्वत कवीञ्शास्त्राब्धिकुम्भोद्भवान्।
अद्याप्याद्रियतेतरां सुरगिरं सर्वोऽपि विद्यालयः
काबूल्देश इतीह नः श्रुतवतामीर्ष्या परं शिष्यते ॥९॥

त्वमेव कुलसर्वस्वं कामधुक्सुरभारति ! ।
मा गा मातरुपेक्ष्यास्मांस्त्रातुमर्हन्ति मन्त्रिणः ॥१०॥

हर्षाद्राजर्षिरेष प्रवितरति निजास्थानविद्वत्कविभ्यः
पञ्चभ्योऽस्मभ्यमेतत्परिषदि विदुषां भूषणैर्भूषितायाम् ।
चिह्नं हस्ताम्बुजाभ्यां स्मितमुखकमलं मानयन्स्वैर्वचोभिः
सम्भूयेमे कृतज्ञा वयमिह सुधियो धन्यवादान्वदामः ॥११॥

अव्यादव्याजसौजन्यपर्जन्यो जानकीसखः ।
निजौजसा राजमानावजस्रं राजदम्पती ॥१२॥

॥ इत्थम् ॥

14-8-49.

Mahamahopadhyaya
K. S. Krishnamurthi Sastrigal,
*Poet Laureate in Sanskrit.*

---

## स्वातन्त्र्यं विजयताम्

स्वातन्त्र्येण समुज्ज्वलं हि सततं श्रीभारतं भासतां
शान्तिं सौख्यभरं चिराय लभतां दिव्यप्रतिष्ठां तथा ।
सर्वस्तुत्यतमा च संस्कृतिरियं धर्मोऽपि संवर्धताम्
धीमान् नेहरुराप्नुयात्सुविमलं धीरः पटेलो यशः ॥

पद्मनाभाचार्यः मठ ( विजापूर )

---